UGC Care Listed ISSN : 7552-2779

# श्रीवैष्णवी

## ( वार्षिकी शोधपत्रिका )

[ अङ्कः 3 ]





**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**( संसदः अधिनियमेन स्थापितः )**
**श्रीरणवीरपरिसरः, कोट-भलवाल, जम्मूः - 181122**
**2022**

प्रो. श्रीनिवास वरखेड़ी
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्,
भारतसर्वकारस्य शिक्षामन्त्रालयाधीनम्)



Prof. Shrinivasa Varakhedi
Vice-Chancellor
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)




के.सं.वि./कुलपति/101/2022-23/४९८ दिनांक:- 01.09.2022

# शुभाशंसा

**चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।**
**मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ।।**

अमन्दानन्दसन्दोहस्यावसरोऽयं यच्श्रीवैष्णवीचरणारविन्दयोर्विराजमानेन केन्द्रीयसंस्कृतविश्वविद्यालयस्य जम्मूस्थितेन श्रीरणवीरपरिसरेण विविधशास्त्र-शोधपत्रान्वितायाः **"श्रीवैष्णवी"** इत्यभिधेयाया वार्षिकशोधपत्रिकायाः प्रकाशनं सोत्साहपरिश्रमं विधीयते। शोधपत्रिकेयं विविधज्ञानामृतपिपासूनां मनोमोदाय स्यादिति शुभाशंसया परिसरनिदेशकसहितमखिलमपि सम्पादक-मण्डलमभिनन्दामि।

( प्रो. श्रीनिवासवरखेडी )
कुलपतिः

56-57, संस्थानिकक्षेत्रम्, जनकपुरी, नवदेहली - 110058
56-57, Institutional Area, Janakpuri, New Delhi - 110058 (INDIA)
**Ph. No.: (O)** 011-28523949, **EPABX** : 28524993, 28521994, 28524995
**EMAIL** : vicechancellorcsu@gmail.com / vc@csu.co.in, **WEBSITE** : www.sanskrit.nic.in

प्रो. रणजित कुमार बर्मन
कुलसचिव (प्र.)
केन्द्रीय संस्कृत विश्वविद्यालय
संसद के अधिनियम द्वारा स्थापित
(पूर्व में राष्ट्रिय संस्कृत संस्थान,
शिक्षा मन्त्रालय, भारत सरकार के अधीन)



Prof. Ranjit Kumar Barman
Registrar (I/c)
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)




॥ श्रीः॥

येषां न विद्या न तपो न दानं
ज्ञानं न शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥

महान् प्रमोदभरितोऽयं विषयो वर्तते यन्मातुर्वैष्णवीदेव्याः चरणसंनिधौ स्थितेन केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरणवीराख्यपरिसरेण विविधविषयसमलङ्कृता श्रीवैष्णवीति शोधपत्रिका प्राकाश्यमानीयत इति ।

वेददर्शनव्याकरणसाहित्यधर्मशास्त्रादिविविधविषयाणामनेकज्ञानविज्ञानानां चिन्तनमननादिसारस्वतकार्यैः समन्वितेयं शोधपत्रिका नूनमेव शास्त्रज्ञानपरम्परां संवर्ध्य ज्ञानपिपासूनां पाठकानां छात्राणां शास्त्ररोचिष्णुजनानां कृते महते उपकाराय भविष्यतीति विश्वसिमि । आशासे यद् भाव्यध्येतॄणां कृतेऽपीयं श्रीवैष्णवी मार्गदर्शनाय भविष्यतीति ।

भवदीयः
R. K. Barman
**प्रो. रणजित कुमार बर्मन**
कुलसचिवः (प्र.)

56-57, सांस्थानिक क्षेत्र, जनकपुरी, नई दिल्ली - 110058
56-57, Institutional Area, Janakpuri, New Delhi - 110058 (INDIA)
**Ph. No.: (O)** 011-28520979, **EPABX :** 28524993, 28521994, 28524995
**EMAIL :** registrar@csu.co.in / pa2registrar@csu.co.in **WEBSITE :** www.sanskrit.nic.in

प्रो. मदनमोहनझाः
निदेशकः
केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीरणवीरपरिसरः,
कोट-भलवालः, जम्मूः -181122
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)
भारतसर्वकारशिक्षामन्त्रालयाधीनः



Prof. Madan Mohan Jha
Director
CENTRAL SANSKRIT UNIVERSITY
Shri Ranbir Campus,
Kot-Bhalwal, Jammu-181122
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Deemed to be University)
Under Ministry of Education, Govt. of India

क्रमांक/No. CSU/पत्रिका/2022-23/1223 दिनांक/Date 1-09-2022

# शुभाशंसा

श्रीवैष्णव्या समलङ्कृतायामस्यां भूमौ प्राचीनकालादेव संस्कृतशास्त्राणां ज्ञानधारा प्रवहमाणा वर्तते, तत आरभ्य नैके विद्वान्सो नैकान् विचारान् प्रस्तूय भूमिमिमां समलञ्चक्रुः । साम्प्रतिकः समाजोऽपि शास्त्रे प्रतिपादितान् तान् विचारान् जानीयादिति कारणात् प्रतिवर्षमिवास्मिन् वर्षेऽपि **"श्रीवैष्णवी"** इत्याख्या वार्षिकी शोधपत्रिका प्रकाश्यते । अस्यां पत्रिकायां भारतस्य मूर्धन्यानामनेकशास्त्रे कृतभूरिपरिश्रमाणां मनीषिणां विविधशास्त्रसमन्विताः शोधपरकाः विचाराः प्रकाशयिष्यन्ते । एते विचाराः शोधच्छात्राणां सामाजिकानां च लाभाय भविष्यन्तीत्याशास्महे, तदर्थं पत्रिकायाः सम्पादकमण्डलसदस्येभ्यो भूरिशो धन्यवादवचांसि समर्प्यन्ते ।

(प्रो. मदनमोहनझाः)
परिसरनिदेशकः

मो. 9004904059, 6005450539. e-mail. mmjha44@gmail.com, rsksjmu@gmail.com

# श्रीवैष्णवी

## सम्पादकीयम्

॥ श्रीः॥

**अन्तःस्थं बहिरुन्नमय्य विशदं ज्योतिः श्रियां युञ्जती**
**वाचां चैव चतुष्टयीमधिपदं भावात्मिकां बिभ्रती ।**
**बोधं शोधमयं सुखं विदधती शोधं च बोधात्मकं**
**स्वाध्यायाध्यवसायिनो दिशि दिशि श्रीवैष्णवी पातु वः ॥**

**"संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः"** देवानामियमिति दैवी, देववाणीति । देववाणीति संस्कृतस्य परिचायकमात्रं सञ्ज्ञामात्रं वा पदं नावबोद्धव्यं प्रत्युत तस्यान्तःस्वरूपरहस्यात्मकराजप्रासादस्य मुख्यद्वारभूतमद्वितीयमनुपमं च पदं वेदितव्यम् । यथा देवानां महिमा ह्यनुभवमात्रगम्यो भवति तथैव संस्कृतस्य महिमाप्यनुभवमात्रगोचरो विद्यते । स्वानुभवैकगम्यो हि विषयो वचनविन्यासैः कियदिव कियानिव च प्रकाशयितुं शक्यत इत्यत्र संस्कृतप्रसादामृतमधिहृदयमधिजग्मुषो विदुषो विहाय कोऽन्यः खलु प्रामाण्यपदवीमधिष्ठातुं शक्नुयात्?

श्रीवैष्णवीचरणधूलिपवित्रधाम्नि जम्मूनगरे विराजमानेन केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरणवीरपरिसरेण **"श्रीवैष्णवी"** इतिनाम्नी वार्षिकी शोधपत्रिका प्रतिवर्षं प्रकाश्यते । कोरोनामहासङ्कटकालवशाद् यद्यपि विलम्बितं परं पुनरपि सकलजगतामधिष्ठात्र्याः श्रीवैष्णव्या एव दृगनुग्रहादैषमोऽप्येतस्याः शोधपत्रिकायाः प्रवृत्तं प्रकाशनमाचार्याणां प्राध्यापकानां शोधार्थिनां विद्यार्थिनां च शोधलेखैः स्वरूपसौष्ठवं बिभर्त्ति । विषयविभाजनमप्येतस्यां बृहत्परिधि-वैविध्यमधितिष्ठति । तथा ह्येकत्र वेदनिरुक्तोपनिषदध्यात्मपुराणव्याकरणज्योतिषन्यायदर्शनमीमांसादर्शनवेदान्तदर्शन-योगदर्शनकाश्मीरशैवदर्शनादिनिबन्धनाः प्राच्यविद्यावगाहिनो विषया अपरत्र च शिक्षाशास्त्रराजनीतिविज्ञानसङ्गणकविज्ञान-लोकसंस्कृतिक्रीडाविज्ञानशारीरिकशिक्षापर्यावरणविज्ञानादिनिबन्धनास्तावदाधुनिकविद्यासमुल्लासिनो विषया अपि श्रीवैष्णवीक्रोडे क्रीडन्ति । विषयानुक्रमणीनिर्माणक्षणेषु तर्हि सर्वमपीदं वैविध्यमनुध्यायैव भाषाविभागप्रामुख्यमेव तावत् पुरस्कृतम् ।

अपि च, विश्वविद्यालयानुदानायोगस्य संरक्षणसूच्यामपि (UGC Care List) स्वकीयसुगन्धं समन्ताद्विकिरन्ती श्रीवैष्णवी विविधविद्याजुषां सहृदयविदुषां हृदयेषु खल्वितोऽपि हर्षश्रियः समुल्लासयतितराम् ।

केन्द्रीयसंस्कृतविश्वविद्यालयस्य माननीयकुलपतीनां प्रो. श्रीनिवासवरखेड़ीमहोदयानां कुलसचिवानां प्रो. रणजित-कुमारबर्मनमहोदयानां श्रीरणवीरपरिसरनिदेशकानां प्रो.मदनमोहनझावर्याणां च शुभाशंसावचोभिर्निर्विघ्नसम्पन्नता-प्रतिभूतिसुवासितायां संशोधनादिपरिश्रमशीकरमुक्तोन्मुक्तकान्तिसंवादकसम्पादकमण्डलसदस्यानामुत्साहैरुल्लासितायां शोधपत्रिकायामस्यामुपनिबद्धानि सर्वाण्यपि शोधपत्राणि चिन्तकानां वैचारिकान्दोलनसौन्दर्यमुद्गिरन्ति प्रतिभान्ति । क्वचिदेव केवलं भाषायाः सुपरिनिष्ठितस्वरूपाभावः परिशीलनसौख्यविघातमुपजनयतीति सम्पादनकर्म्मणो नैष्ठुर्यमप्यास्वादयद्भिरस्माभिर्नेतोऽतिरिच्य किञ्चिद्वक्तुं युक्तम् । समेभ्यो मङ्गलकामनापुरस्सरं तावदेतावन्मात्रमेवोद्गरीतुमलम्-

**उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥** ऋग्वेदः-१०.७१.४ ॥

सम्पादकमण्डली व्यतिकरेऽस्मिन् सविशेषमभिनन्दनीया ।

**( प्रो. सतीश कुमार कपूरः )**
**साहित्यविभागाध्यक्षः**

# विषयानुक्रमणिका

श्रीवैष्णवी, वर्ष-2022, अंक-3 ISSN : 7552-2779

# श्रीमद्देवीभागवतसन्दर्भे स्मृतिबीजस्य निर्वचनशास्त्रस्य वैशिष्ट्यम्

-प्रो. सुनिलकात्यायनः*

**"षडङ्गो वेदोऽध्येयो ज्ञेयश्च[1]" "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्"[2]** इत्यादिवाक्याभ्यां वेदार्थज्ञानाय वेदातिरिक्तानि शास्त्राणि अपि अध्येयानीति सारः समुपदिष्टः। तत्र वेदपाठे वर्णोच्चारणाय शिक्षारूपं घ्राणम्, शब्दसिद्धौ मुखरूपं व्याकरणम्, मन्त्रगताक्षराणां संख्यानिश्चये पादात्मकं छन्दश्शास्त्रम्, यज्ञकालस्य निर्धारणे चक्षुभूतं ज्योतिषशास्त्रम् यज्ञस्य क्रियाकलापानां परिज्ञाने च हस्तरूपात्मकं कल्पशास्त्रम् प्रभवति। तथा च मन्त्रगतानां सामान्यशब्दानां विशिष्टानां वा निश्चयेनार्थावबोधाय निर्वचनशास्त्रं निरुक्तमेव श्रोत्ररूपे परिगणितम्।

एवमेव जनसामान्येभ्यः सरलभाषया सहजतया च वेदप्रतिपाद्यानां विषयाणां धर्मादीनां सम्मुखीकरणाय पुराणानि प्रथितानि। तेषु पुराणेषु एतेषामङ्गानां प्रयोगः साहाय्यं च नैरन्तर्येण दृष्टिपथे आयात्येव। निर्वचनशास्त्रप्रक्रियापि केषुचित्स्थलेषु नामादिसंज्ञकेषु प्रायः दरीदृश्यते। एषः नैरूक्तविषयोस्ति। शाब्दबोधाय वैज्ञानिकरीत्या रहस्योद्घाटनेऽपि निरुक्तशास्त्रस्य प्रयोजनं वर्तते। यद्यपि वेदरूपायाश्श्रुतेः षण्णामेव अङ्गानां स्व स्व सन्दर्भे महत्ता न्यूना नास्ति, परञ्च श्रुतिः श्रोत्रमाध्यमेनैव ग्राह्या तच्च श्रोत्ररूपं निरुक्तशास्त्रम् इति कृत्वा निर्वचनशास्त्रस्य महत्त्वं किमपि अधिकं वर्तते। लिखितमपि- **"व्याकरणस्य कात्स्न्र्यमिदं निरुक्तम्[3]"** निर्वचनशास्त्रस्येदमपि वैशिष्ट्यं यत् यस्य कस्यचित् पदस्याध्ययनेन न केवलं तत्पदोदितस्यार्थस्यावावबोधो जायते अपितु यदा निर्वचनशास्त्रानुसारिनिर्वचनप्रक्रियया पदार्थानुसन्धानं क्रियते तदा तत्पदयुक्तं प्रकरणं ऐतिह्यं च झटिति परिज्ञातं भवति। विषयेस्मिन् कानिचनोदाहरणरूपाणि पदानि देवीभागवतादिग्रन्थादुद्धृत्य निर्वचनसहितानि प्रस्तूयन्ते। यथा- **"कृष्णद्वैपायन व्यासः"** द्वापरयुगे सत्यवतीनाम्नी निषादपुत्री यदा पराशरमहर्षेः संयोगेन गर्भं धारितवती तदा तया

* वेदविभागः, सं.वि.ध.वि.सं.का.हि. विश्वविद्यालयः, वाराणसी

1. पातंजलमहाभाष्ये ....
2. महाभारते सायणकृतर्ग्भाष्यभूमिकायां च
3. निरूक्ते 1.5

यथाकालं यमुनायाः मध्ये स्थिते द्वीपे व्यासो जनितः, अतः तस्य बालस्य नाम कृष्णद्वैपायनोऽभवत्। यथा चोक्तम्-

**"सुषुवे यमुनाद्वीपे पुत्रं काममिवापरम्[1]"**

एवं प्रकारेण महर्षिपराशरात् सत्यवत्यां द्वैपायनो व्यासः द्वीपे जनिं लब्धवान्। ततः कालान्तरे स एव सत्यवतीसुतः वेदशाखानां ज्ञानं प्राप्तवान्। तदनन्तरं निकटकाले कलेर्युगं ज्ञात्वा तेन द्वैपायनेन वेदस्य व्यासं (विभजनं) सम्पादितं, पुराणानि रचितानि, उत्तमं महाभारतमपि च रचितम्। तदा स्वकीयान् शिष्यान् सुमन्तु-जैमिनि-पैल-वैशम्पायना-सित-देवलान् स्वात्मजं शुकं च वेदान् विभागशः कृत्वा द्वैपायनोऽध्यापयत्, तस्मात् तस्य कृष्णद्वैपायनस्य अपरं नाम वेदव्यासः प्रथितं जातम्। यथा च-

**वेदविस्तारकरणात् व्यासनामाभवन्मुनिः[2]।**
**शिष्यानध्यापयामास वेदान् कृत्वा विभागशः॥**

**सुमन्तुं जैमिनिं पैलं वैशम्पायनमेव च।**
**असितं देवलं चैव शुकं चैव स्वमात्मजम्[3]॥**

एवमेव क्षत्रियस्य राज्ञः परीक्षितस्य नाम्न्यपि ऐतिह्यवैशिष्ट्यं वर्तते- महाभारतस्य काले कौरवपाण्डवानां मध्ये युद्धो जातः तदा अर्जुनस्य या अपरा पत्नी सुभद्रा नाम्न्यासीत् तस्याः पुत्रोभिमन्युर्महाभारतयुद्धे वीरगतिं प्राप्तवान्, तदनन्तरं अभिमन्युपत्न्याः उत्तराया गर्भस्थशिशुरश्वत्थामानाम्ना द्रोणिना हतो जातः। पुनश्च पाण्डवैः प्रार्थितस्य कृष्णस्याद्भुतप्रतापेन स जीवितोप्यभवत्।

तस्मिन् युद्धे समाप्ते सति कुरुवंशस्यापि प्रायशो नाशोभवत्, अतो यदा उत्तरायाः गर्भात् सुतो जातः सः परीक्षित इति नाम्ना प्रसिद्धिं गतः, तत्र तस्य परीक्षित इति नामकरणे हेतुरयमस्ति यत्-युद्धे कुरुवंशस्य नाशो जातः। अतएव तस्मिन् कुरुवंशे क्षीणे जाते यो सुतः निस्सृतः सः **परीक्षित** इति संज्ञया प्रथितोभवत्। लिखितमपि-

**अर्जुनस्य तथा भार्या कृष्णस्य भगिनी शुभा।**
**सुभद्रा या हृता पूर्वं जिष्णुना हरिसम्मते॥**

**तस्यां जातो महावीरो निहतोसौ रणाजिरे।**
**अभिमन्युर्हतास्तत्र द्रौपद्याश्च सुताः किल॥**

---

1. श्रीमद्देवीभागवते 2.2.37
2. तत्रैव 2.2.44
3. तत्रैव, 2.2.45-46

**अभिमन्योर्वरा भार्या वैराटी चातिसुन्दरी।**
**कुलान्ते सुषुवे पुत्रं मृतो बाणाग्निना शिशुः॥**
**जीवितः स तु कृष्णेन भागिनेयसुतः स्वयम्।**
**द्रौणिबाणाग्निनिर्दग्धः प्रतापेनाद्भुतेन च॥**
**परिक्षीणेषु वंशेषु जातो यस्माद् वरः सुतः।**
**तस्मात् परीक्षितो नाम विख्यातः पृथिवीतले[1]।**

एवं प्रकारेण निर्वचनशास्त्रस्य इदमपि वैशिष्ट्यं यदिन्द्रप्रभृतिषु देवतासु या या गुणविशिष्टता वर्तते तास्सर्वा निर्वचनद्वारा ज्ञातुं शक्यन्ते। इन्द्रेति नामविषय उक्तो यथा- **इरां=अन्नं विदारयति**[2] अतः इन्द्रोभवत्, इरा अन्नं भवति, स इन्द्रो वृष्टिप्रदानेन तं उप्तम्बीजं अंकुराय प्रभवति सम्वर्धयति, अर्थात् अंकुरभेदरूपं जलधारया विदारणं सम्पादयति, एवं च कालान्तरे तदन्नं मनुष्यैः प्राप्यते एतत्सर्व्वं इन्द्रस्य जलवृष्टिरूपेण अद्भुतप्रतापेन सम्भवति। अतोन्यमपि निर्वचनं **"इरां ददातिपग"**[3] अर्थात्=अन्नदः इन्द्रः नाम्नार्थो बोध्यते। एवमेव इन्दवे गच्छतीति इन्द्रः अर्थात् इन्दुद्रवः एव इन्द्रः। इन्दुः=सोमः तस्मै सोमपानाय इन्द्रो गच्छति, अनया निर्वचनदृष्ट्या ज्ञायते यत् इन्द्रदेवता यज्ञेषु सोमपानाय गमनं करोति, अनेनैव नाम्ना इदमपि ज्ञायते यत् सः सोमपदार्थः इन्द्रायाधिकं रोचतेपि। अत उक्तम्- **"इन्दौ रमतेग"**[4]।

यतोहि सोमः इन्द्रस्यातिप्रियः हविष्पदार्थः अतः सः इन्दुरमः सन् इन्द्र इति संज्ञया=प्रसिद्धिं गतः। एवं च कस्मिंचिद् ब्राह्मणे-

**तद्यदेनं प्राणै : समैन्धंस्तदिन्द्रस्येन्द्रत्व**[5]मिति समाम्नातमेवाधारीकृत्य यास्केनोक्तम्- **इन्धे भूतानि**[6], अर्थात् सा इन्द्रदेवता प्राणिषु प्राणभावत्वेन शरीरे स्थितः प्राणं प्रदीपयति। आचार्यासाणस्य मते इदं सर्वं, असौ अकरोत् अतः **"इदं करणात्**[7]**"** इन्द्र इति नाम जातम्। अमन्युपुत्रस्य मते **"इदं दर्शनात्**[8]**"** इति कृत्वा इन्द्र इति संज्ञा संजाता, अर्थात्

---

1. श्रीमद्देवीभागवते 2.7.2-7
2. निरूक्ते 10.19.
3. निरूक्ते तत्रैव
4. निरूक्ते तत्रैव
5. निरूक्ते
6. निरूक्ते तत्रैव
7. निरूक्ते तत्रैव
8. निरूक्ते तत्रैव

इदं=सर्वं अद्राक्षीदसौ अतः इन्द्रः, अत्र इन्द्र-देवतायां सर्वदर्शित्वमपि अस्ति इति विज्ञाप्यते। **"इदि = परमैश्वर्ये"**[1] धातुना निष्पन्नमिदं नाम **"इन्दन् ईश्वरः सचासौ**[2]**"** इन्द्रः। शत्रूणां द्रावयिता वा अरीणां दारयितृत्वेन वा यज्ञकर्तृणां आदरकर्तृरूपेण वा इन्द्रो विराजते। उपर्युक्ताः एतेपि सर्वे गुणाः इन्द्रदेवे विराजन्ते इति यथाप्रसंगं बोधनीयाः। एतादृशो नैकगुणोपेतः बोधः केवलं नाम्ना परिज्ञायते एतादृशश्च नामार्थपरिज्ञानविधिः वेदादिषु शास्त्रेषु निर्वचनशास्त्रेण निघण्टुसहितेन निरुक्तेनैव सम्भवति।

एवमेव पृथिव्या नामधेयान्यपि पुराणादिशास्त्रदृष्ट्या नैकगुणाधारितानि प्रथितानि। यथा- **"मेदिनी"**। देवीभागवतानुसारं ब्रह्मविष्णुमहेशैः वासाय पृथिवी समुत्पादिता, तदा महादेवीं अचलालाम्बीनामां आधारशक्तिं उक्तवति, तया आधारशक्त्या सा मेदयुता पृथ्वी स्थिरा जाता। तत्र पृथिव्याः मेदसंयोगः मधुकैटभनाम्नोः असुरयोः कथाप्रसंगे (**भगवतः विष्णोः मधुकैटभाभ्यां सह युद्धो जातः, तस्मिन् काले**) प्रसिद्ध एवास्ति। अतः पृथिवी "मेदिनी" इति नाम्ना प्रसिद्धिं गता। 'मेद' पदस्यार्थः- श्वेत मांस इति।[3] सारोयमस्ति यत् मधुकैटभयोर्मेदसः संयोगेन पृथिव्याः "मेदिनी" नाम सम्पन्नं जातम्। उक्तमपि- **"मधुकैटभयोर्मेदः संयोगान्मेदिनी स्मृता**[4]॥ एवमेव 'पृथ्वी' इत्यस्मिन् पदे अपि "पृथ्वी विस्तारयोगतः" तत्रैव। अर्थात् इदं पृथ्वीनामापि अस्याः अतिविस्तृतरूपदर्शनात् प्रथितम्।

"निरुक्तशास्त्रेपि प्रथनात् पृथिवीत्याहुः" आम्नातम्। यद्यपि तत्र पूर्वपक्षिणा "कः एनां अप्रथयिष्यत्?" इति प्रश्नः उपस्थापितः तदुत्तरे सिद्धान्तिनापि पृथिव्याः विस्तृतं रूपं दृष्ट्वा "इयं पृथिवी दर्शनेन पृथुः कैश्चिदन्यैः प्रथिता वा स्यात्" इत्युत्तरितम्। परं च वाजसनेयिसंहितायां स्पष्टमेव कृतं यत्- "पूर्वे ये वसिष्ठादयः ऋषयः तैः ऋषिभिः अनयोः द्यावापृथिव्योः अन्तप्रदेशाः दृढीकृताः, तदा एते द्यावापृथिव्यौ प्रथनतां प्राप्ते।- **"यदेदन्ता अददृहन्त पूर्व आदिद्यावा पृथिवी अप्रथेताम्**[5]**"**॥ एतच्च प्रथनक्रियाप्रयोगः दर्शपौर्णमासेष्टिनामके श्रौतयागे हविरूपपुरोडाशस्य प्रथनकाले दृष्टो भवति, तत्र पुरोडाशः प्रार्थ्यते यत्- हे पुरोडाश! त्वं स्वभावतः उरुप्रथाः त्वं स्वकीयं विस्तारं कुरु, एवमेव यज्ञस्यास्य ते यजमानोपि विस्तारं प्राप्नोतु। यथोक्तं

1. निरूक्ते तत्रैव
2. निरूक्ते तत्रैव
3. शिति-मांसतो मेदस्त इति गालवः। निरुक्त 4
4. श्रीमद्देवीभागवते 3.13.8
5. शु.यजुर्वेद वाजसनेयिसंहिता 17 .25

संहितायाम्– **“उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामग्निष्टे त्वचं मा हिंसीत्”**[1] सारोऽयमस्ति यत् प्रथनक्रियया पृथिव्याः “पृथिवी” नाम प्रथिता जाता। एवमेव अस्यां पृथिव्यां सर्वेषां स्थावरजङ्गमपदार्थानां धारणाय विशिष्टशक्तिः विद्यमानास्ति, इयं समस्तान् पदार्थान् धारयितुं क्षमा वर्तते अतः अस्याः अपरं नाम धरा इत्यपि जाता। उक्तमपि– **“धारणाच्च धरा प्रोक्ता”**[2]। तथैव **“मही चापि महीयस्त्वात्”**[3] इत्यनुसारं अस्याः पृथिव्याः महनीयरूपत्वात् मही इत्यपि संज्ञा अस्ति।

पर्वतानां पर्यायेषु नामसु महीधर इति एकं नाम दृष्टिपथे आयाति, तेषां हिमालय–मेरुप्रभृतीनां पर्वतानाम् एकं महत्कार्यं पुराणेषु प्रोक्तं यत् पृथिव्याः यथास्थानं धारणाय पर्वताः दृढीकृताः। ते च एवंरूपे यथा– कस्यचित्काष्ठफलकस्य प्रान्ते मध्ये वा लौहकीलं तत्काष्ठफलकस्य स्थैर्याय कीलयन्ति तद्वत् एते गिरयः अपि कीलिताः भवन्ति। अतः मह्याः धारणाय एते पर्वताः स्थापिताः तस्मात् ‘‘महीधर’’ इति नाम्ना प्रख्यापिताः। यथा चोक्तम्–

**‘‘गिरयश्च कृताः सर्वे धारणार्थं प्रविस्तराः। लोहकीलं यथा काष्ठे तथा ते गिरयः कृताः महीधरा महाराज प्रोच्यन्ते विबुधैर्जनैः**[4]**।।** शोधपत्रस्यास्य निर्वचनशास्त्रवैशिष्ट्यप्रतिपादने अयमेव हेतुरस्ति यत् कस्यापि पदार्थस्य देवविशेषस्य क्रियाप्रभृतिविशेषस्य वा सम्यग्ज्ञानाय निर्वचनशास्त्रस्य ज्ञानम् अपेक्षते एव। तथैव नवीनगवेषणासम्बद्धेषु कार्येषु अस्य शास्त्रस्य प्रयोगः महत्सहायकः इष्टसाधकश्च भवेत्, इत्याशासे। अस्तु शम्।



1. शु.यजुर्वेद वाजसनेयिसंहिता 1.22।
2. श्रीमद्देवीभागवते 3.13.8
3. श्रीमद्देवीभागवते 3.13.9
4. श्रीमद्देवीभागवते 3.13.10

 ISSN : 7552-2779

# दर्शनान्तररीत्या क्रियाविशेषणानां कर्मत्वं क्लीबता च-एकमध्ययनम्

**प्रो. जी.एस्.वी. दत्तात्रेयमूर्तिः** *

**क्रियाविशेषणानां कर्मत्वमिति** वाक्यं परिभाषारूपम्। यद्यपीयं नागेशविरचिते परिभाषेन्दुशेखरे न दृश्यते, अथापि सीरदेवकृतपरिभाषावृत्तौ इयं परिभाषा पठ्यते। अत्र प्रधानतया विचारणीयाः अंशाः

1. क्रियाविशेषणानामित्यस्य पाणिनिमहर्षेः सम्मतिः।
2. इदं वचनं सकर्मकधातुस्थले प्रवर्तते आहोस्वित् अकर्मकधातुस्थले।
3. हतशायिकाः शय्यन्ते इत्यत्र शायिकाः इति द्वितीयाबहुवचनान्तम् उत प्रथमाबहुवचनान्तम्।
4. हतशायिकाः शय्यन्ते इति असाधुप्रयोगः इति विचारः।
5. अत्र खण्डदेवाशयः।
6. भट्टाचार्याणामाशयः।
7. क्रियाविशेषणेभ्यः षष्ठीविभक्तिः प्रवर्तते न वा।
8. क्रियाविशेषणानामित्यङ्गीकारे असाधारणफलं किम् इति।

सिद्धान्तकौमुद्यां तद्धितेषु प्राग्वहतीयप्रकरणे **ओजः सहोम्भसा वर्तते**[1] इति सूत्रं वर्तते। ओजसा-बलेन वर्तते, सहसा वर्तते, अम्भसा वर्तते इत्यर्थे तृतीयान्तेभ्यः ठक्स्यादिति तदर्थः। उदा-**औजसिकः** शूरः। **साहसिकः** चौरः। **आम्भसिकः** मत्स्यः। तदनु **तत्प्रत्यनुपूर्वमीपलोमकूलम्**[2] इति सूत्रं वर्तते। द्वितीयान्तात् अस्माद्वर्तते इत्यर्थे प्रत्यनुपूर्वेभ्यः

---

* व्याकरणाचार्यः, संस्कृतविभागः, एस्.सी.एस्.वी.एम्.वी. समविश्वविद्यालयः, काञ्चीपुरम्।

1. वर्तते व्याप्रियते इत्यर्थे ओजस् सहस् अम्भस् एभ्यः तृतीयान्तेभ्यः ठक्स्यादिति सूत्रार्थः 14-4-27 (अष्टाध्यायी)।
2. द्वितीयान्तात् अस्मात् वर्तते इत्यर्थे प्रत्यनुपूर्वेभ्यः ईपलोमकूलळशब्देभ्यः ठक्स्यादिति सूत्रार्थः 14-4-28 (अष्टाध्यायी)।

ईपलोमकूलशब्देभ्यः वर्तते इत्यर्थे ठक्स्यादिति तदर्थः। अत्र पूर्वसूत्रात् वर्तते इत्यनुवर्तते। उदा-प्रतीपं वर्तते **प्रातीपिकः**। अत्र वृतुधातोः अकर्मकत्वात् कथं कर्मणा साकं सम्बन्धः इति प्रश्ने क्रियाविशेषणत्वात् द्वितीया इति मूले[1] दीक्षितेन उक्तम्। तस्माज्ज्ञायते क्रियाविशेषणानामित्यस्य पाणिनिमहर्षेः सम्मतिरस्तीति।

### अत्र संशयः

क्रियाविशेषणानामिति वचनं सकर्मकधातुस्थले प्रवर्तते उत अकर्मकधातुस्थले इति। अत्र संशयबीजं तावद् वृतुधातोरकर्मकत्वात् कथं कर्मणा साकं सम्बन्ध इति प्रश्नकरणमेव। अतः सकर्मकधातुस्थले एव प्रवर्तते इति वक्तव्यम्। परन्तु परिशील्यमाने **सार्वधातुके यक्**[2] इति सूत्रभाष्ये[3] **हतशायिकाः शय्यन्ते** इति प्रयोगः दरीदृश्यते। अत्रोद्योते[4] शायिकेति क्रियाविशेषणमिति लिखितम्। हतानां शयनानि यादृशानि तत्सदृशानि क्रियन्ते देवदत्तादिभिः इति तदर्थः। पूर्वोक्तरीत्या इदं वचनं सकर्मकधातुस्थले एव प्रवर्तते इत्युक्तत्वात् प्रकृते शीङ्धातोः अकर्मकत्वात् कथं वा उद्योतग्रन्थः सङ्गच्छत इति।

### अत्रावान्तरपूर्वपक्षः

वस्तुत आलोच्यमाने **हतशायिकाः शय्यन्ते** इति प्रयोगः असाधुप्रयोगः कुत इति चेत् अयं भावे प्रयोगः। अत्र तिङानुद्यमानक्रिया असत्त्वभूता क्रिया भवति। कर्मणि प्रयोगे तिङानूद्यमानक्रिया सत्त्वभूता। अतः तत्र कर्मणि संख्यान्वययोगः भवति। (असत्त्वभूतो

---

1. भट्टोजिदीक्षितः (2002) सिद्धान्तकौमुदी, बालमनोरमा-तत्त्वबोधिनीसहिता, तृतीयोभागः पृ. 459, मोतीलालबनारसीदास्।
2. 3-1-67 (अष्टाध्यायी)
3. इत्थं हि तत्र भाष्यम्- कथं तर्हि इस द्विवचनबहुवचनानि भवन्ति पाकौ, पाका इति? आश्रयभेदात्। यदसौ द्रव्यं श्रितो भवति भावस्तस्य द्विवचनबहुवचनानि भवन्ति। इहापि तर्हि यावन्तस्ते तां क्रियां कुर्वन्ति, द्विवचनबहुवचनानि प्राप्नुवन्ति। एवं तर्हि इदं तावदयं प्रष्टव्यः- क्रिमभिसमीक्ष्यैतत् प्रयुज्यते-पाकौ पाका इति। यदि तावत्पाकविशेषानभिसमीक्ष्य यश्चौदनस्य पाकः, यश्च गुडस्य, यश्च तिलानां बहवस्ते शब्दाः सरूपाश्च। तत्र युक्तं बहुवचनमेकशेषश्च। तिङभिहिते चापि तथा। भावे बहुवचनं श्रूयते। तद्यथा-उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते। इति। व्याकरणमहाभाष्यम्, पृ. 103।
4. एवं चासिका इत्यादि क्रियाविशेषणं प्रथमान्तम्। क्तिन्नधिकारस्थ ण्वुलः स्त्रीत्वस्य सत्वेन सामान्ये नपुंसकमित्यस्याप्रवृत्त्या न क्लीबत्वम्। इति। वव्याकरणमहाभाष्यम्, उद्योतः- पृ. 104।

भावो तिङ्पदैरभिधीयते इति भाष्यात्) भावे पुनः संख्यान्वयाभावात् एकवचनमेव उत्सर्गतः भविष्यति किल। तथाच चैत्रेण सुप्यते, चैत्राभ्यां सुप्यते, चैत्रैः सुप्यते इतिवत् हतशायिकाः शय्यते इत्यनेनैव भाव्यम्। तस्मात् असाधुशब्दं स्वीकृत्य तत्र प्रथमा वा द्वितीया वेति विचारः अयुक्तः खलु।

### तटस्थसमाधानम्

सरूपसूत्रे भाष्ये **एका क्रिया** इति वर्तते। यदि क्रिया एका स्यात् पचतः, पचन्तीत्यादिषु कथं द्विवचनबहुवचने इत्याशङ्कां कृत्वा, धातुप्रकृतिकप्रत्ययवाच्यगतसंख्यायाः व्यापारे आरोपेण आरोपितद्वित्वादिकमादाय द्विवचनबहुवचने भवतः इति समाहितम्। तद्वत् प्रकृतेपि आरोपितद्वित्वादिकमादाय **शय्यन्ते** इत्यत्रापि बहुवचनं साध्वेव खलु इति एवमुपपादनेपि भावे एकवचनान्तेनैव भाव्यम्, कर्मणि पुनः वचनव्यवस्थया भाव्यं शब्दशक्तिस्वभावात् तस्मात् हतशायिकाः शय्यन्ते इति प्रयोगः न साधुप्रयोगः इति।

### अत्र कौण्डभट्टः[1]

अत एव भाष्यकारप्रयोगात् कदाचित् भावेपि बहुवचनं भवत्येवेति भूषणे कौण्डभट्टः भणति।

### अत्र शब्दकौस्तुभकारः[2]

**उष्ट्रासिकाः आस्यन्ते, हतशायिकाः शय्यन्ते** इत्यत्र उष्ट्राणाम् अनेकप्रकारयुक्ता-न्यासनानि, तादृशानि देवदत्तादिकर्तृकाण्यासनानि यादृशानि हतानाम् अनेकप्रकारयुक्तानि शयनानि तादृशानि देवदत्तादिकर्तृकाणि शयनानीत्यर्थः। अत्र स्त्र्यधिकारे धात्वर्थनिर्देशे ण्वुल्। उष्ट्राणां ह्यासिकाः स्वरूपत एव विलक्षणाः। हताश्च उत्ताना अवतानाः विकीर्णकेशा विस्रस्तवस्त्राः नानाप्रकारं शेरते। तत्साम्यादाख्यातवाच्यस्यापि भावस्य स्वरूपकृतस्वगत-भेदावभासात् बहुवचनमिति दीक्षिताशयः।

---

1. कौण्डभट्टः (2015) वैयाकरणभूषणम्, पृ. 149 इत्थं हि तत्रत्यो ग्रन्थः-एवं च प्रकॉतेप्येकत्वादि विवक्षाविरहेपि साधुत्वार्थमेकवचनमुपपद्यत इति न कश्चिद् दोषः। उष्ट्रासिकाः आस्यन्ते, हतशायिकाः शय्यन्ते इत्यत्र भावे बहुवचनं कथमिति चेत्, सत्यम्। भाष्यकारवचनादत्रैव भावे बहुवचनं साध्विति हि प्रामाणिकाः इति।
2. भट्टोजिदीक्षितः (1985) शब्दकौस्तुभः पृ. 385, चौखम्बा संस्कृत सिरीज् आफीस्, विद्याविलास प्रेस्, बनारस।

**अयमर्थः**

कौस्तुभे **तत्साम्यात् आख्यातवाच्यस्यापि भावस्य स्वगतभेदावभासात् बहुवचनं भवत्येवे**ति दीक्षितोक्तया, **आश्रयाणामुष्ट्राणां भेदादेकप्रकारयुक्तान्यासनानि भिन्नानि तत्साम्याच्चाख्यातवाच्यभावभेदादास्यन्त इति बहुवचन**मिति यग्विधायकसूत्रस्थ-कैयटोक्तया च भावे लकारेपि यत्र भावभेदे गमकं तत्र बहुवचनं भवत्येव। यथा-प्रकृते उपमानबहुत्वेन उपमेयेपि तत्प्रतीतेः। अन्यथा उपमाने बहुत्वोपादनं व्यर्थः स्यात्। हि यतः एकासने तावत्साम्यसंभवः, तत्प्रतिपादने पलं च नास्ति। भावभेदे गमकाभावे तु औत्सर्गिमेकवचनमेवेति भावः। एवञ्च सकर्मकाकर्मकधातुविभागमन्तरा फलव्यापारान्वय-विभागं चानपेक्ष्य क्रियाविशेषणस्य कर्मत्वात् द्वितीयैव प्रवर्तते, न तु प्रथमेति। इदं तु वृत्तिपदमञ्जरीकाररीत्या इति सार्वधातुके यक् इति सूत्रे दीक्षितः।

**अत्र वैयाकरणसिद्धान्तनिष्कर्षः**

सकर्मकधातुस्थले फलस्य मुख्यमेव कर्मत्वम्। तत्समानाधिकरणस्य स्तोकादेरपि कर्मत्वात्ततोपि द्वितीया। **स्तोकं पचति** अनियतलिङ्गस्य तस्य **सामान्ये नपंसकम्**[1] इति नपुंसकत्वम्। नियतलिङ्गस्य तु तत्तल्लिङ्गत्वमेव-**आदिं पचति**। तत्रैव व्यापारान्वये प्रथमा-**स्तोकं पचति**। **आदिः पचति**। घञन्तस्थलेपि फलान्वये **स्तोकं पाकः**, व्यापारान्वये प्रथमा पुंलिङ्गता च-**स्तोकः पाकः**। अकर्मकधातुस्थले सर्वथा प्रथमैव-**सुखं वर्तते**। **हतशायिका शय्यन्ते** इति यग्विधायकभाष्यप्रयोगे क्तिनः स्त्रधिकारस्थत्वात् स्त्रीत्वम्। शेतेरकर्मकतया प्रथमा, बहुवचनं च। क्रियाविशेषणात् कदाचित् तृतीयापि भवति। यथा- **तृप्तिकामः स्तोकेनौदनं पचति**। धात्वर्थस्य करणत्वेन विवक्षायां तृतीया-**ज्योतिष्टोमेन यजेतेति**। स्पष्टं चेदं **करणे यजः** इति सूत्रे।

धात्वर्थतावच्छेदकफलाश्रयत्वं कर्मत्वम्। यथा-**तण्डुलं पचती**त्यादै। धात्वर्थता-वच्छेदकं फलं-विक्लित्तिः। तदाश्रयत्वेन तण्डुलस्य कर्मत्वम्। धात्वर्थस्य फलस्य विक्लित्यादेरपि व्यपदेशिवदेकस्मिन् इति परिभाषया फलाश्रयत्वात् कर्मत्वम्। विक्लित्यादेः कर्मत्वे प्रयोजनं तु तत्समानाधिकरणे स्तोकादौ कर्मत्वसिद्धिः। अत एव **फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वमिति** स्वाशयमाविष्करोति नागेशः लघु-शब्देन्दुशेखरे[2]। इदानीं फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वं यथा अङ्गीक्रियते

1. 2-4-17, अष्टाध्यायी।
2. नागेशभट्टः (1941) लघुशब्देन्दुशेखरः गुरुप्रसादसहितः, पृ-1251 चौखम्बा संस्कृतसिरीज आफीस, विद्याविलासप्रेस, वाराणसि सिटि।

तथा न्यायसाम्यात् **धात्वर्थव्यापारस्यापि व्यपदेशिवद्भावेन व्यापाराश्रयत्वेन कर्तृत्वं** स्यादिति चेत् इष्टापत्तिरेव। अत एव लघुशब्देन्दुशेखरव्याख्याने गुरुप्रसादशेषे[1] परमगुरुचरणैः एवमुक्तम्– एवं **व्यापारस्यापि व्यपदेशिवद्भावेन व्यापाराश्रयत्वात्कर्तृत्वे तत्समानाधि-करणे मन्दं गच्छति, कुटिलं गच्छतीत्यादौ प्रथमा सिध्यती**ति। वस्तुतः परिशील्यमाने अस्मिन् विषये गुरुप्रसादकाराणां, तत्त्वदर्शिनीकाराणाञ्च मतभेदः वर्तते। अत एव तत्त्वदर्शिन्या[2] सुबर्थवादे **व्यापारस्यापि व्यपदेशिवद्भावेन व्यापाराश्रयत्वात् कर्तृत्व**-मिति कारकप्रकरणशेखरस्थगुरुप्रसादग्रन्थस्तु मतान्तराभिप्रायेण इति लिखितं गुरुचरणैः पेरिसूर्यनारायणशास्त्रिभिः।

**अत्र नागेशसिद्धान्तः**

**क्रियाविशेषणत्वात् नपुंसकत्वं प्रथमान्तत्वञ्च** युक्तमिति शेखरग्रन्थः[3]। अकर्मकस्थले फले व्यापारवैयधिकरण्याभावत् कर्मत्वाभावेन तत्समानाधिकरणस्यापि तत्त्वाभावान्न द्वितीया, किन्तु प्रातिपदिकार्थमात्रे प्रथमैवेति तदाशयः।

**अत्र खण्डदेवः**

**उभसर्वतसोः कार्या धिगुपर्यादि त्रिषु।**
**द्वितीयाम्रेडितान्तेषु ततोन्यत्रापि दृश्यते॥** इति वार्तिकम्।

तस्यायं भावः। तसिप्रत्ययान्तयोरुभसर्वशब्दयोः योगे द्वितीयिभक्तिः कार्या। यथा– उभयतः कृष्णं गोपाः, सर्वतः कृष्णं गोपाः। धिक्शब्दयोगे द्वितीया। यथा–धिक् कृष्णाभक्तम्। आम्रेडितान्तेषु द्विरुक्तेषु त्रिषूपर्यादिषु द्वितीया। यथा उपर्युपरि, अध्यधि, अधोधो लोकं हरिः। एवं पादत्रयेण तत्तच्छब्दयोगे द्वितीया विहिता। एभिर्योगे एव द्वितीयैवेति न नियमः, किन्तु प्रयोगसत्त्वे शब्दविशेषमनादृत्य तत्र सर्वत्रापि द्वितीया कार्येत्याशयेन ततोन्यत्रापि दृश्यते इति चतुर्थः पादः आरब्धः। तत्र पादे ततःये प्रतिपदोक्ताः शब्दाः उभयतः इत्यादयः, एतेभ्यः, अन्यत्रापि इतरत्रापि द्वितीयाविभक्तिः दृश्यते। अतो दृशिग्रहणं

---

1. नागेशभट्टः (1941) लघुशब्देन्दुशेखरः गुरुप्रसादसहितः, पृ. 1382 चौखम्बासंस्कृतसिरीज आफीस, विद्याविलासप्रेस, वाराणसि सिटि।
2. कौण्डभट्टः (2016) वैयाकरणभूषणसारः तत्वदर्शिनीव्याख्यया समुल्लसितः, पृ. 341, 342 श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपतिः।
3. नागेशभट्टः (1983) लघुशब्देन्दुशेखरः चन्द्रकलया समेतः, पृ. 286 चौखम्बासंस्कृतसिरीज आफीस, विद्याविलासप्रेस, वाराणसी सिटि।

सर्वोपाधिव्यभिचारार्थम्। एवञ्चास्य वार्तिकस्य तुरीयः पादः क्रियाविशेषणानां द्वितीयान्तत्वे प्रमाणत्वेन व्याख्यातः भाट्टरहस्ये[1] खण्डदेवेन।

### अत्र भट्टाचार्याः

**स्तोकं पचति, मृदु पचती**त्यादौ विरुद्वविभक्तयवरुद्धपदोपस्थापितस्यापि स्तोक-मृद्वादेर्धात्वर्थपाकादावभेदान्वयो व्युत्पत्तिसिद्धः। क्रियाविशेषणस्थले च न द्वितीयातिरिक्त-विभक्तिरुत्पद्यते, क्रियाविशेषणानां क्लीबत्वं कर्मत्वञ्चेत्यनुशासनेन तत्र कर्मत्वातिदेशात्। कर्मत्वे सति यत्कार्यं भवति द्वितीयाविभक्तिरूपं कार्यं तत् क्रियाविशेषणवाचिपदोत्तरमपि भवतीति। कार्यातिदेशोयं, न तु क्रियाजन्यफलशालित्वरूपं मुख्यं कर्मत्वमिति भट्टाचार्याणा-माशयः[2]। क्रियाविशेषणानां कर्मत्वम् इत्यनुशासनघटकक्रियापदस्य सार्थकप्रत्ययान्तधातू-पस्थाप्यार्थपरत्वादित्यर्थः। तथाच सार्थकप्रत्ययान्तधातुना उपस्थाप्ये अर्थे विशेषणानां कर्मत्वमिति अनुशासनस्य अर्थः। एतादृशार्थस्वीकारादेव स्तोकः पाकः इत्यत्र न स्तोकपदोत्तरं द्वितीया। तत्र पचधातूत्तरघञः सार्थकत्वाभावात् पचधातुः सार्थकप्रत्ययान्तो न भवतीति तदुपस्थाप्ये पाके अन्वयिनः स्तोकस्य कर्मत्वाभावात्।

### क्रियाविशेषणेभ्यः षष्ठ्यभावे मानम्[3]

क्रियाविशेषणेभ्यः षष्ठ्या अप्रवृत्तौ **पूजनात् पूजितम्**[4] इति सूत्रभाष्यं प्रमाणम्। तत्र हि- दारुणं यथा तथाध्यापकः इत्यर्थे दारुणम्-अध्यापकः इत्यवस्थायाम् दारुणाध्याकः इतिऽभीष्टरूपसिध्यर्थं **मलोपवचनञ्च** इति वार्तिकमारब्धम्। दारुणः, अध्यापकः इति

---

1. खण्डदेवः (1985) भाट्टरहस्यम्, खण्डदेवभावप्रकाशयुक्तः, पृ. 208, Sremati Printers] Mount Road, Madras.
2. इत्थं हि तत्रत्यो ग्रन्थः-स्तोकं पचति, मृदु पचति इत्यादौ विरुद्धविभक्त्यवरुद्धपदोपस्थापित-स्यापि स्तोकमृद्वादेर्धात्वर्थपाकादावभेदान्वयो व्युत्पत्तिसिद्धः तदनुरोधेन च द्वितीयान्तपदधातु-पदयोः समभिव्याहारस्याप्यभेदेनान्वयबोधौपयिकाकङ्क्षात्वमुपगम्यते। क्रियविशेषणस्थले च न द्वितीयान्तपदधातुपदयोः **क्रियाविशेषणानां क्लीबत्वं कर्मत्वम्** इत्यनुशासनेन तत्र कर्मत्वातिदेशात्। इति। व्युत्पत्तिवादः, सादर्शः, पृ. 31।
3. अत एवं पूजनात्पूजितम् इति सूत्रे दारुणं यथा भवति तथाध्यापकः इत्यर्थकस्य **दारुणाध्यापकः** इत्यस्य सिध्यर्थं मलोपवचनम् आरब्धं भाष्ये। अन्यथा समासेनैव सिद्धे तद्व्यर्थ स्यात्। एतदेव भाष्यं ततः षष्ठ्यभावेपि मानम्। इति नागेशभट्टः (1983) लघुशब्देन्दुशेखरः चन्द्रकलया समेतः, पृ. 720 चौखम्बा संस्कृतसिरीज आफीस, विद्याविलासप्रेस, वाराणसी सिटि।
4. 2-2-8 (अष्टाध्यायी)

पदद्वयम्। तत्र मलोपे कृते दारुणाध्यापक: इति रूपम्। मलोपानन्तरं दारुण अध्यापक इति भिन्नं पदद्वयम् न तु समस्तम्। यदि क्रियाविशेषणेभ्य: **षष्ठी**[1] स्यात्तत्रषष्ठी इति सूत्रेण समासे समासत्वात् प्रातिपदिकसंज्ञायां **सुपोधातुप्रातिपदिकयो:**[2] इत्यनेन सुब्लुकि दारुणाध्यापक: इति रूपसिद्धौ तद्रूपसिध्यर्थं वार्तिकारम्भो व्यर्थ एव स्यात्। अत: एतद्भाष्यप्रामाण्यात् क्रियाविशेषणेभ्य: षष्ठी न प्रवर्तते।।

### क्रियाविशेषणानामित्यङ्गीकारे शाब्दिकमते असाधारणफलम्

**सकृल्वौ** इत्यत्र यणादेशसिद्धिरेवास्य असाधारणं फलम्। अत एव शेखरे सकृल्वौ इत्यत्र क्रियाविशेषणत्वाद्वितीया इत्युक्तं नागेशेन। तथाहि- **ओ: सुपि**[3] इति सूत्रेण उकारान्तस्य धातो: यणादेश: विधीयते अजादौ प्रत्यये परे। उदा-खलप्वौ, खलप्व:। तत्र **गतिकारकेतरपूर्वपदस्य यण् नेष्यते** इति वार्तिकम्। गतिकारकयोरभावे केवले अङ्गेपि यण्भवत्येव, सोपपदत्वे तु गतिकारकयो: सत्त्वे एव। तदितरपूर्वकत्वे यणादेश: न भवति। उदा-परमलुवौ। एवञ्च सकृल्लुनीते इत्यर्थे सकृल्वौ इत्यत्र सकृच्छब्द: क्रियाविशेषणम्। तस्य कर्मत्वे तद्व्यापकस्य कारकत्वस्यापि तत्र सत्त्वात् कारकपूर्वकत्वमादाय यणादेशसिद्धिरेवात्र प्रयोजनम्। अत: क्रियाविशेषणानां कर्मत्वे इदमसाधारणं प्रयोजनम्।।

**इति शम्।**

### उपयुक्तग्रन्थसूची

1. वैयाकरणसिद्धान्तकौमुदी-मोतीलालबनारसीदास:।
2. प्रौढमनोरमा-शब्दरत्न-भैरवी-भावप्रकाशसहिता-चौखम्बासंस्कृतसंस्थानम्।
3. वैयाकरणसिद्धान्तभूषणम्-निरञ्जनीव्याख्यया प्रकाशटिप्पण्या च सहितम्, Institute Francais de Pondycherry, 11, Pondycherry.
4. वैयाकरणभूषणसार: तत्वदर्शिनीव्याख्यया समुल्लसित:- श्रीवेङ्कटेश्वरवेद-विश्वविद्यालय:, तिरुपति:-2016।

---

1. 2-3-50 (अष्टाध्यायी)।
2. 2-4-71 (अष्टाध्यायी)।
3. 6-4-83 (अष्टाध्यायी)।

5. लघुशब्देन्दुशेखरः गुरुप्रसादसहितः- आन्ध्रविश्वकलापरिषत्- (कुम्भघोणे मुद्रापितम्) विशाखपट्टणम्-1941।

6. लघुशब्देन्दुशेखरः चन्द्रकलासहितः-चौखम्बा संस्कृतसिरीज आफीस, विद्याविलासप्रेस, वारणास सिटी-1983।

7. भाट्टरहस्यम्-खण्डदेवभावप्रकाशसहितम्, Published with the Financial Assistance from The Ministry of Education and Social Welfare, Government of India & 1985, Printed by Sremati Printers, Mount Road, Madras.

8. व्याकरणमहाभाष्यम्, चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली।

9. व्युत्पत्तिवादः आदर्शव्याख्यानसहितः, वाणीविलासप्रेस, बीबीहटिया, वाराणसी।

10. वैयाकरणसिद्धान्तलघुमञ्जूषा कुञ्जिका-कला टीकाद्वयेन संवलिता, द्वितीयो भागः। चौखम्बा संस्कृतसिरीज् आफीस, वारणासी-1989।

11. शब्दकौस्तुभः तस्य प्रथमाध्यायद्वितीयपादमारभ्य तृतीयाध्यायद्वितीयपादान्तो द्वितीयो भागः-जयकृष्णदासः हरिदासगुप्तः, चौखम्बासंस्कृतसिरीज् आफीस, विद्याविलास प्रेस्, बनारस् लिटी-1985।



# शाब्दिकमतानुसारं व्यञ्जनाविचार:

डॉ. तेजनाथपौडेल: *

**"रसो वै: स: रसं ह्येवायं लब्ध्वानन्दी भवति, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन। आनन्दं ब्रह्म प्रज्ञात्मा, अजर: अमर: हितम्"** इत्यादीनि औपनिषदानि सुभाषितानि ब्रह्मरूपस्य आनन्दस्य सर्वातिशायिनीं महनीयतां प्रकाशयन्ति। काव्येषु च प्राय: सर्वैरेव काव्यशास्त्रकारैर्मनीषिभि: प्राधान्येनानन्दप्राप्तिहैतुकं काव्यमिति प्रत्यपादि। अत: काव्यानन्दस्य मुख्यं रूपमस्ति आनन्दानुभूति: भावानुभूति: आनन्दानुभूतिर्वेति विषये नास्ति कश्चन विवाद:। रसाभिव्यञ्जनहेतुत्वेन लक्षणकारै: भरतादिभिर्विभावानु-भावसञ्चारिभावा:[1] निर्दिष्टा:। एतैरभिव्यक्त: स्थायिभावो ब्रह्मास्वादसहोदरमानन्दरूपं बिभर्तीति निष्कर्ष:। व्यञ्जनैकमूलं काव्यमेव सहृदयहृदयेष्वानन्दस्वरूपं जनयितुं समर्थ इति काव्यशास्त्राचार्याणामभिमतम्। अनया व्यञ्जनाशक्त्या रस: आस्वाद्यते। रसास्वादचुञ्चव: साहित्यिका अभिधालक्षणातिरिक्तां स्वतन्त्रां व्यञ्जनाशक्तिं स्वीकुर्वन्ति। अधुना प्रश्नो जागर्ति यत् का सा व्यञ्जना यया व्यङ्ग्य पदं निष्पद्यते। वि+अञ्जु+ल्युट्+टाप = व्यञ्जना। अत्राञ्जु धातोरर्थ: प्रकटनपरक:[2] शब्दोच्चारणमात्रेण यत्र सहसा कोऽपि निर्दिष्टार्थ: (संकेतितार्थ:) श्रोतृमानसे उद्भाषत्ते सोऽर्थ: शास्त्रेषु अभिधेयार्थ: भवति। तस्माच्छब्दात् यया वृत्त्या तदर्थस्य भानं जातं सा वृत्तिरभिधा भवति वृत्तिं विना (शक्तिं विना) शब्दाद् अर्थज्ञानं न भवति।

उक्तञ्च गङ्गेशेनापि विषयेऽस्मिन्[3] नागेशोऽपि वदति[4]। एतत् प्रकारान्तरेण वक्तुं शक्नुम: यत् शब्दादर्थज्ञाने यस्य ज्ञानमावश्यकं तादृश: शब्दार्थसम्बन्ध:। शब्दधर्मविशेष:, शब्दशक्तिविशेषो वा वृत्तिरिति। आचार्यमम्मट: अभिधावृत्तिमाश्रित्य कथयति यत्- **"स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते"**।[5] कदाचित् मुख्यार्थस्य बाधादियोगात्

---

* साहित्यविभाग:, केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीरणवीरपरिसर:, जम्मू:

1. विभावानुभावव्यभिचारि संयोगाद्रसनिष्पत्ति:। का.प्र. 4.28 वृत्तौ
2. सिद्धान्तकौमुदी
3. शाब्दबोधहेतु: शब्दार्थोपस्थित्यनुकूल: पदपदार्थयो: सम्बन्ध: वृत्ति:- तत्त्वचिन्तमणौ, शब्दखण्डे
4. शाब्दबोधप्रयोजकस्य तदर्थनिरूपित: शब्दधर्मो वृत्ति:। लघूमंजूषायाम्
5. काव्यप्रकाशे

अर्थान्तरस्यापि ज्ञानं जायते तदानीं सः अर्थः लक्ष्यार्थ उच्यते। यया वृत्त्या एतस्यर्पिस्य प्रकाशनं भवति सा वृत्तिर्लक्षणेत्युच्यते।

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया।।**[1]

यथा "गङ्गायां घोषः" इति वाक्ये गङ्गाशब्दस्य जलप्रवाह इति संकेतितार्थः तत्र मुख्योऽर्थः जलप्रवाह, अस्य ज्ञापिका अभिधाशक्तिः। परन्तु सम्यक्तया विचारः क्रियते चेत् जलप्रवाहे घोषस्य स्थितिरसम्भवा तस्मात् मुख्यार्थस्य बाधा जाता। अस्यां स्थितौ सामीप्यसम्बन्धात् तटरूपार्थं बोधयति गङ्गाशब्दः प्रयोजनांशमाधृत्य। अत्र तटरूपार्थबोधने लाक्षणिकोऽस्ति गङ्गाशब्दः। लोके हि एवंविधाः प्रकाराः बहुशः दृश्यन्ते। अतः वृत्तिः लोकव्यवहारादेव स्वीक्रियते।

सहृदयशेमुषीमद्भिः साहित्यिकैः एतदनन्तरं वयञ्जनानाम्नी काचिदपरापि वृत्तिः स्वीक्रियते। तेषामभिप्रायः प्रयोजनमूललक्षणास्थले तत् प्रयोजनं बोधयितुम् आवश्यकः व्यापार एव व्यञ्जनात्मकः, अर्थात् प्रयोजनमूललक्षणास्थले (गङ्गायां घोषः, अत्र शीतत्वपावनत्वादयः प्रयोजनानि भवन्ति)

लक्षणाद्वारा तटाद्यर्थबोधानन्तरं शीतत्वादिप्रयोजनबोधनिमित्तमपरा काचित् वृत्तिरङ्गीकर्तव्या। सा व्यञ्जना वृत्तिः। इयं वृत्तिः पदार्थद्वयस्य सम्बन्धबोधानन्तरं जायमानः प्रतीयमानार्थबोधः, सम्बन्धबोधानन्तरं जायमानः प्रतीयमानार्थबोधः सम्बन्धमभिधाय क्षीणतामुपगतया तात्पर्यवृत्त्या कथमपि भवितुं नार्हतीति तेनापि व्यङ्ग्यार्थं बोधयितुं व्यञ्जानाभ्युपेया भवति।

सा चेयं व्यञ्जना न खलु साहित्यशास्त्रोपज्ञः किन्तु सर्वविद्यानिधानं व्याकरण-शास्त्रमेवास्या अपि मूलम्। वैयाकरणा हि चादीनां तिबादीनां च द्योतकत्वं प्रोचुः। द्योतकत्वञ्च समभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वम्। एवञ्च व्यञ्जनावादः स्पष्टमेव व्याकरणेऽवलोक्यते। अतः व्यञ्जनावादस्य पृष्ठभूमिः वैयाकरणानां स्फोटवादः। स चापि स्फोटः मध्यमानादव्यङ्ग्य एव भवति। अत एव नागेशभट्टः- "मुख्यार्थबाधग्रहनिरपेक्ष-बोधज्ञनको मुख्यार्थसम्बद्धासम्बद्धप्रसिद्धार्थविषयकः वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्‌बोध-संस्कारविशेषो व्यञ्जना।"[2] इति लक्षणञ्चकार। अत्र नागेशः संस्काररूपामिमां प्राह। अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्व **"क्वचित् समभिव्याहृतपदीयशक्ति व्यञ्जकत्वम्"** इति वैयाकरणानामपि तत्स्वीकारः आवश्यकः।

1. तत्रैव
2. लघुमञ्जुषायाम् प्र.

एषा च शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात्। वक्त्रादिवैशिष्ट्या-दिज्ञानं व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः[1]

**शाब्दिकैः सा स्मृतैकैव त्रिविधापि स्वरादिवत्।**
**अभिधा लक्षणा व्यक्तिरित्याख्यात्रितयं मतम्॥**[2]

**विविधा वृत्तिरेकैव वैलक्षण्येऽपि वस्तुतः।**
**इत्याहुः शाब्दिकास्तेषां भिन्नत्वे गौरवाद्धयम्॥**[3]

अस्याभिप्रायः तस्यैव टीकायामेवं स्पष्टयति टीकाकारः यथैक एव स्वरो ह्रस्वदीर्घप्लुतभेदेन त्रिविधः भवति तथा शक्तिरेव शब्दवृत्तिरभिधालक्षणाव्यञ्जनाभेदेन त्रिविधा भवति। वृत्तीनां भेदे गौरवमस्ति। एवमाशाधरभट्टमहोदयेन कोविदानन्दे त्रिवेणिकायाञ्च शाब्दिका व्यञ्जनावृत्तिं नाभ्युपगच्छन्तीति वैयाकरणमतमभ्यूह्य प्रत्याख्यातम्। तस्यायं भावः स्यात् यत् प्राचीनभाष्याद्याकरग्रन्थेषु कुत्रापि स्पष्टतया व्यञ्जनाविषयको विशिष्टो विचारः नोपलभ्यते। टीकादिग्रन्थेषु **"वृत्तिश्च शक्तिः लक्षणान्यतररूपा"** इत्येव लिखितम् न तु व्यञ्जनाभिप्रायेण अन्यमतरूपा इति। शेखरकारेण सिंहो माणवकः इत्यत्र लक्ष्यार्थस्य माणवकादेर्नियतोपस्थितिकत्वाभावेन सिंहादिपदरूपप्रातिपदिकार्थत्वा-भावशङ्कां निधाय **"अन्वयानुपपत्तिपूर्विका लक्षणा पदे एव"**[4]

ये स्फोटवादमङ्गीकुर्वन्ति अर्थात् शब्दस्य स्फोटरूपां शक्तिं ये मन्यन्ते तैरवश्यं व्यञ्जनाङ्गीकर्तव्या। अन्यथा तु अन्यथा सकलशाब्दिकाभिमता स्फोटस्य व्यङ्ग्यता नैव सिद्धा भवेत्। अत एव नागेशभट्टेन व्यञ्जनास्वरूपं प्रदर्श्योक्तम्- **"अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्वञ्च क्वचित समभि-व्याहृतपदीयशक्तिव्यञ्जकत्वमिति वैयाकरणनामपि तत्स्वीकार आवश्यकः**[5] इति। तथापि तार्किकेषु शाश्वतिकविरोधानां शाब्दिकानां तार्किमतप्रत्याख्यानमात्रफलकः व्यञ्जनासमर्थप्रयासः भवेत्। अन्यथा लक्षणायाः प्रत्याख्याने- **"जघन्यवृत्तिकल्पनायाः अन्याय्यत्वात् वृत्तिद्वयावच्छेदकद्वयकल्पने गौरवात् सति तात्पर्ये " "सर्वे सर्वार्थवाचकाः" इति भाष्याल्लक्षणाया अभावाच्च**[6] इत्यादयः यावन्तः हेतव

1. वैया. सि. ल. म. पृ 133
2. कोविदानन्दे 42
3. तत्रैव पृ 26 श्लोक 19
4. लघुशब्देन्दुशेखरे
5. वै. सि.ल.म. पृ 133
6. परमलघुमञ्जुषा पृ 62

भट्टनागेशेन प्रदर्शिताः ते सर्वेऽपि व्यञ्जनां स्वीकुर्वन्ति। व्यञ्जनायाः यावानर्थो व्यङ्ग्यो भवति तावान् सर्वोऽप्यप्रसिद्धशक्त्या व्यक्तो भवति। व्यञ्जनवृत्तौ श्रद्धामावहतामालङ्कारिकाणां मते सहृदयैरेव व्यङ्ग्योऽर्थ अवगम्यते तादृशोऽर्थः अप्रसिद्धशक्त्या वैयाकरणैः प्रश्नः क्रियते किं नाम व्यञ्जना? तथा चोक्तं नागेशेन **"शक्तिर्द्विधा, प्रसिद्धा, अप्रसिद्धा च। आमन्दबुद्धिवेद्यात्वं प्रसिद्धात्वम्, सहृदयहृदयमात्रवेद्यात्वमप्रसिद्धात्वम्। तत्र गङ्गादिपदानां प्रवाहादौ प्रसिद्धा शक्तिस्तीरादौ चाप्रसिद्धति किमनुपपन्नम्। ननु सर्वे सर्वार्थवाचका इति ब्रूषे चेत्, तर्हि घटपदात् पटप्रत्ययः किन्न स्यादिचि चेत् न, तर्हि न, सति तात्पर्ये इत्युक्त्वात् तात्पर्याभावादिति गृहाण। तात्पर्यञ्चा तत्रेश्वरं देवतामहर्षिलोकवृद्धपरम्परातोऽस्मादादिभिर्लब्धमिति सर्वं सुरूढम्।**[1] इति" एवं प्रकारेण यथा लक्षणास्थले तात्पर्यवशात् प्रसिद्धया शक्त्यैवेष्टार्थस्य लाभः तथा व्यञ्जनास्थलेऽपि वक्त्रादिवैशिष्ट्यसहकारेणाप्रसिद्धशक्त्यैवेष्टार्थलाभो भविष्यति। किं व्यञ्जनया? यदि हर्यादिभिर्निपातानां द्योतकत्वस्वीकारात्, स्फोटस्य व्यङ्ग्यत्वस्वीकाराच्च शाब्दिकैर्द्योतकतारूप व्यञ्जना स्वीक्रियते, तर्हि प्रादीनां द्योतकत्वाङ्गीकारान्नैयायिकैरपि सा स्वीकर्तव्या भवेत्। इति।



1. तत्रैव पृ. 63

# सार्वभौमिकव्याकरणविमर्शः

**डा. प्रमोदशुक्लः***

***सारांशः***- *कस्याश्चित् भाषायाः नियमानां संग्रहः व्याकरणं भवति। संसारस्य सर्वासां भाषाणां व्याकरणं भिन्नं भिन्नं भवति। परन्तु तेषु विविधेषु व्याकरणेषु मानवभाषायाः केचन नियमाः समानाः भवन्ति इत्येव सार्वभौमिकव्याकरणस्य संकल्पनास्ति। भाषायाः मूलं तत्त्वं मानवचेतनायां स्थितं भवति। अतः एतत् मानसिकव्याकरणमपि कथ्यते। कस्याश्चिद् भाषायाः मूलनियमाः अथवा मूलं व्याकरणं कुत्रावस्थितं भवति इति प्रश्नस्य उत्तरम् अस्मिन् लेखे निहितमस्ति। सार्वभौमिकव्याकरणस्य संकल्पना अमेरिकादेशीयेन भाषावैज्ञानिकेन चॉम्स्कीमहोदयेन कृता अस्ति। अनेन महोदयेन भाषायाः उत्पत्तेः विकासस्य च सम्बन्धः मानवस्य चेतनया (बुद्ध्या) सह मन्यते। अस्य मतेन मानवस्य चेतना सार्वभौमिकी अस्ति, इत्यतः भाषायाः मूलभूताः नियमाः अपि सार्वभौमिकाः सन्ति। सार्वभौमिकव्याकरणस्य प्रारूपं (Structure) प्रत्येकं मनुष्यस्य चेतनायां विद्यमानं भवति। तत् कालान्तरे विविधक्षेत्रगताभिः विविधभाषाभिः अभिव्यक्तं भवति।*

भाषायाः उत्पत्तेः विकासस्य च काचित् प्रकिया भवति। तस्यां प्रक्रियायां मतद्वयमस्ति- प्रथमे मते भाषायाः व्याकरणं भाषायाः स्वरूपे संरचनायां च निहितं भवति। तच्च व्याकरणं मानवः समाजे स्थित्वा अर्जयति धारयति च। व्याकरणं कस्याश्चित् विशेषभाषायाः भवति। विशेषभाषा कस्याश्चिद् विशेषसंस्कृतेः यथार्थवर्णनं करोति। अतः समस्तसंसारस्य भाषासु यः नियमः समानरूपेण अस्ति तस्य अन्वेषणं कर्तुं न शक्यते। यतोहि भाषाणां जन्म विकासः च मानवानां स्थान-समय-परिस्थिति-आवश्यकतानुसारं भवतः। अतः प्रत्येकं भाषायाः व्याकरणमपि पृथक् अस्ति।

द्वितीयं मतमस्ति- मानवचेतना (मानवबुद्धिः) सर्वत्र विद्यमाना अस्ति। अतः भाषायाः मूलनियमः अपि सर्वत्र विद्यमानः अस्ति। एषा एव संकल्पना सार्वभौमिक-व्याकरणस्य आधारः अस्ति। यत् व्याकरणं संसारस्य सर्वासु भाषासु समानरूपेण तिष्ठति तत् सार्वभौमिकं व्याकरणं भवति। प्रत्येकं मनुष्यस्य चेतनायां सार्वजनीनस्य व्याकरणस्य एकं प्रारूपं भवति। तस्मादेव विविधभाषाणां व्याकरणानि प्रतिफलन्ति।

---

* अतिथिशिक्षकः, के.सं.वि.वि. श्रीरणवीरपरिसरः,
कोटभलवाल, जम्मूः

अतः वक्तुं शक्यते यत् संसारस्य असङ्ख्यभाषाः एकस्यैव व्याकरणकप्रारूपस्य विविधानि बाह्यरूपाणि सन्ति।[1]

**व्याकरणसम्बन्धिनः**

अनेन प्रकारेण सार्वभौमिकं व्याकरणं सर्वमानवानां व्यवहारस्य कापि मानसिकव्यवस्था अस्ति। एतया भाषायाः मानसिकव्यवस्था सहजा भवति। 1980 तमे दशके एषः सार्वभौमिकव्याकरणम् इति शब्दः प्रकाश्यमागतः।

**सार्वभौमिकव्याकरणस्य सम्प्रत्ययः**

1. ये भाषानियमाः संसारस्य सर्वासु भाषासु समानरूपेण संनिहिताः सन्ति ते एव सार्वभौमिकव्याकरणम्। यथा संवेदनायाः कृते सर्वासु भाषासु केचन शब्दाः भवन्ति एव। एवमेव हास्य-रौद्र-प्रेम-विभत्स-घृणादिभावानां कृते सर्वासु भाषासु शब्दाः भवन्ति।
2. सार्वभौमिकव्याकरणं सर्वासां भाषाणामाधारः अस्ति।
3. सार्वभौमिकव्याकरणस्य तात्पर्यमस्ति-असङ्ख्यभाषिकविभेदेषु विद्यमाना एका अमूर्ता समरूपा च भाषाव्यवस्था।
4. सर्वभाषासु विद्यमानमेकं सामान्यं व्याकरणम्।
5. सार्वभौमिकव्याकरणस्य लक्ष्यमस्ति-मानवजन्यसमस्तभाषाणां मूला प्रकृतिः।
6. अस्य सार्वभौमिकव्याकरणस्य प्रवर्तकः अस्ति-अमेरिकादेशीयः भाषावैज्ञानिकः मनोवैज्ञानिकश्च नॉमचॉम्स्कीमहोदयः।[2]
7. सार्वभौमिकव्याकरणे मानवमनसः भाषिकक्षमतायाः वर्णनं भवति। तथा मानवमनसः सम्भावितकार्ययोजनायाः वर्णनं चापि भवति।

**सार्वभौमिकव्याकरणस्य नियमाः**

1. भाषायाः मूलतत्त्वानि सीमितानि भवन्ति। तेषु एव सम्पूर्णभाषाणां व्याख्या भवितुमर्हति। तैः एव सीमितनियमैः व्यक्तिः असीमितवाक्यानां संरचनां करोति।
2. चॉम्स्कीमहोदयस्य मान्यता अस्ति यत् भाषा मानवस्य जन्मजातगुणः अस्ति। जन्मकाले शिशोः मानसपटलः रिक्तः न भवति। तस्य मानसपटलः सहजातवृत्तिभिः पूर्णः भवति।

---

1. भाषावैज्ञानिकः असङ्ख्यभाषिकविभेदेषु विद्यमानां कामपि समरूपाम् अमूर्तां भाषाव्यवस्थां व्याकरणं वा अन्वेषयति।
2. अस्य जन्म 7 दिसम्बर 1928 तमे अभवत्। इदानीं एषः वर्षदेशीयः अस्ति।

3. शिशुः स्वसहजातवृत्तिभिः एव स्वस्य वातावरणे व्याप्तेषु विविधतापूर्ण-व्यावहारिकवाक्येषु सरलवाक्यनियमान् अभिजानाति।
4. शिशुः स्ववातावरणे स्थितं समस्तवाचिकव्यवहारस्य संरचनाबीजम् अवगच्छति। अतएव कापि भाषिकप्रक्रिया सार्वभौमिकी भवति।
5. सहजातवृत्तिभिः सम्बद्धाः काचिदपि भाषा काञ्चित् सामान्यनियमान् न अतिक्रामति।
6. वास्तविकरूपेण मूलभाषा जन्मजाता भवति। विशेषभाषायाः तु अर्जनं क्रियते।
7. मनुष्यस्य भाषाधिगमस्य जन्मजाता प्रवृत्तिः भवति। तेनैव कारणेन स्वभाषिकसमाजे वसन् मनुष्यः भाषां शृणोति, भाषिकप्रयोगान् पश्यति, मनसि एव तेषां विश्लेषणं करोति। इत्थं सः भाषानियमान् आत्मनि धारयति। अस्याः एव प्रक्रियायाः निरन्तरम् अभ्यासेन मनुष्यः कमपि नियमबद्धं भाषिकं व्यवहारं कुर्वन् भाषां शिक्षते। सः मूलभाषां न शिक्षते अपितु विशेषभाषां शिक्षते। तया एव भाषया तस्य समस्तानि कार्याणि भवन्ति।
8. नॉम चॉम्स्कीमहोदयस्य इदं व्याकरणं 'रूपान्तरण-प्रजनक-व्याकरणम्' इति कथ्यते। आङ्ग्लेन 'ट्रांसफॉरमेशनल-जनेरेटिव-ग्रामर' इति उच्यते। अस्य अपरं नाम 'निष्पादकव्याकरणम्' अथवा 'परिणामिव्याकरणम्' इत्यपि अस्ति।

**सार्वभौमिकव्याकरणस्य व्याप्तिः**

भाषायाः सन्दर्भे या सार्वभौमिकता अस्ति सा भाषाशिक्षणस्य प्रक्रियया भाषिकप्रवृत्या च सम्बद्धा अस्ति। विश्वस्य प्रत्येकं भाषिकसमुदायेषु बालकानां भाषाशिक्षणस्य कश्चन निश्चितः क्रमः भवति। यथा-

1. बालः ध्वनिषु सर्वादौ स्वरं शिक्षते, व्यञ्जनान्यनन्तरम्।
2. बालः स्वरेषु चादौ विवृतस्वरं शिक्षते, संवृतस्वरञ्चानन्तरम्।
3. व्यजनेषु ओष्ठ्यमादौ शिक्षते। तत्रापि प, ब, म।
4. मातरः मम्-मम्, बब्-बब्, पप्-पप् इत्यादीन् ध्वनीन् कृत्वा सरल-ओष्ठ्यध्वनीन् उच्चारयितुं शिक्षयन्ति बालान्।
5. संसारस्य प्रायः प्रत्येकं भाषासु प, ब, म इति वर्णानां प्रारूपं भवति। परन्तु एतस्य तथ्यस्य व्याख्या मनुष्यस्य चेतनायाः सार्वभौमस्थित्या सह न करणीया। अस्य तथ्यस्य भौतिकव्याख्या सरलतया कर्तुं शक्यते। यतोहि मस्तिष्कस्य भाषणकेन्द्रस्य न्यूनतमप्रेरणया ओष्ठौ दोलायमानौ भवितुं शक्नुतः, तदपेक्षया जिह्वादोलनं कर्तुं कठिनं अस्ति। अस्मात् एव कारणात् उपर्युक्तानाम् ओष्ठ्यवर्णानां सहजव्याप्तिः प्रायः सर्वासु भाषासु अस्ति।

6. भाषाशिक्षणस्य क्रमे प्रायः प्रथमवर्षान्ते शिशोः अव्यक्ताः अस्पष्टाः च ध्वनयः (शब्दाः) आविष्कृताः भवन्ति। इत्थं सः प्रथमे वर्षे चतुरान् पञ्च वा शब्दान् वक्तुं पारयति। सर्वादौ एकशब्दं ततः द्वयोः शब्दयोः काञ्चन वाक्यप्रकारान् वा वक्तुम् आरभते।

7. द्वितीये वर्षे शिशोः शब्दभाण्डारः वर्धते। तत्र द्विशतं चतुःशतं वा शब्दाः तस्य शब्दभाण्डारे आयान्ति। सहैव भाषाविशेषस्य (यस्मिन् भाषासमुदाये सः अस्ति) व्याकरणसम्बन्धिनी अपि तस्य वाग्व्यवहारे निर्मिता भवति।

8. परन्तु इत्थं नास्ति यत् सः ध्वनिभिः शब्दान्, शब्दैः च वाक्यानि निर्मातुं शिक्षमाणः भवति। स्वमनसि सः यत् किमपि विचारयति, तत् वाक्यार्थमेव भवति, यत् संप्रेषयितुं सः प्रयत्नं करोति। परन्तु वागिन्द्रीयाणां धारणशक्तीनां च असामर्थ्यवशात् सः व्याकरणदृष्ट्या पूर्णवाक्यं वक्तुं न शक्नोति। वस्तुतः मनसि सः वाक्यमेव वदन् भवति। परन्तु उच्चारणे तत् प्रकटितं न भवति। वयं पश्यामः यत् उच्चारणस्य अङ्गानि अशुद्धान् शब्दान् उच्चारयन्ति। भाषायाः विकासक्रमेण सः आत्मनः असमर्थताभ्यः शनैः शनैः मुक्तः भवति। तामेव प्रक्रियां वयं भाषाशिक्षणम् इति नाम्ना वदामः। किन्तु बालकस्य भाषाशिक्षणस्य क्रमः वाक्याद् ध्वनिं प्रति भवति।

भाषासु सार्वभौमतत्त्वानि प्राप्तानि भवन्ति चेदपि तासु पारस्परिकानि विभेदकलक्षणानि नैव निराकरणीयानि। वस्तुतः भाषासु सार्वजनीनाभिलक्षणेभ्यः अधिकाः महत्त्वपूर्णाः ध्यातव्याः च तासु पारस्परिकविभिन्नताः सन्ति। तासु एव भाषाणां पृथक् सत्ता स्वीकृतास्ति।

### सन्दर्भाः


1. www.hi.m.wikipedia.org सार्वभौमिकव्याकरणम्।
2. www.thoughtco.com सार्वभौमिकव्याकरणम्।
3. www.hmood.in सार्वभौमिकव्याकरणम्।
4. on You Tube sakar gupta – Noam Chomsky`s Universal Grammar Theory
5. भाषा शिक्षण हिन्दी, भाग-1, द्विवर्षीय बी.एड. पाठ्यक्रम के लिए पाठ्यपुस्तक, एन.सी. ई.आर.टी.।
6. शिक्षा मनोविज्ञान, अरुण कुमार सिंह, भारती भवन।




# प्राचीनसंस्कृतकाव्यपरम्परायां कवयित्रीणां सारस्वतसाधनम्

डॉ. शुभ्रजित् सेनः *

**Abstract:**

संस्कृतसाहित्यस्य श्रीसम्पादकाः वैदिककालात् उपलभ्यमानाः ग्रन्थाः अधिकाधिकतया पुरुषकविभिः रचिताः सन्ति। यद्यपि स्त्रीकवीनां लिखिताः भूयान्सः संस्कृतग्रन्थाः इतिहासे न दृश्यन्ते तथापि सूक्ष्मरूपेण विचार्यमाणे परिदृश्यते यत् पुरुषकवीनामिव स्त्रीकवीनामपि अवदानं संस्कृतसाहित्ये संलक्ष्यते यद्धि संस्कृतसाहित्यस्य सीमानं समेधयति। मानगतदिशा एतासां कवयित्रीणां मूल्यं न हि नूनमिति मन्मतम्। काश्चित् स्त्रीकवयः स्फुटगीतिकविता अपि विरचितवत्यः इत्याश्चर्यवहम्। साम्प्रतिके काले अपि प्राचीनस्त्रीकाव्यापेक्षया प्रायः अधिकपरिमाणेन काव्यानि मौलिकानि, उपन्यासाः, कथाः, चरितकाव्यानि च ग्रथनन्ति च। अर्थात् मम प्रबन्धस्यास्य लक्ष्यमेतत् यत् वैदिककालोत्तरवर्तिनीनां कवयित्रीणां कृतिभिः आरब्धा, कवयित्रीणां काव्यमूल्यं कियदुत्कर्षवहमिति।

**Key Words:**

वेदमन्त्रटष्ट्री, गङ्गादेवी, मधुराविजयम्, रघुनाथाभ्युदयम्, रामभद्राम्बा, विजयाभट्टारिका चेति।

## मूलप्रबन्धः

### 1.0. उपोद्घातः

वैदिककालादारभ्य अद्यावधि सहृदयहृदये लास्यमानायाः संस्कृतभाषायाः इतिहासः अतिप्राचीनो वर्तते। संस्कृतसाहित्यस्य श्रीसम्पादकाः वैदिककालात् उपलभ्यमानाः ग्रन्थाः

* सहायकाध्यापकः, संस्कृतविभागः,
गौडवङ्गविश्वविद्यालयः, पश्चिमवङ्गः

अधिकाधिकतया पुरुषकविभिः रचिताः सन्ति। यद्यपि स्त्रीकवीनां लिखिताः भूयान्सः संस्कृतग्रन्थाः इतिहासे न दृश्यन्ते तथापि सूक्ष्मरूपेण विचार्यमाणेन परिदृश्यते यत् पुरुषकवीनामिव स्त्रीकवीनामपि अवदानं संस्कृतसाहित्ये वरीवर्ति, यद्धि संस्कृतसाहित्यस्य सीमानं समेधयति। वैदिककाले ऋषिकासु अन्यतमास्तावत् अपाला, घोषा, विश्ववारा, गार्गी, मैत्रेयी, लोपामुद्रा इत्यादयः। एता ऋषिकाः चतुर्वेदमन्त्राणां दर्शनपूर्वकं स्वमतानि उद्घोषयन्। न केवलमेतत्, अपि तु ब्राह्मणग्रन्थेषूपनिषत्सु च वर्णिता ब्रह्मजिज्ञासासम्बन्धिनी तत्त्वावली अद्यापि परमज्ञानप्राप्तौ मार्गदर्शिकेति।

भाविनि काले वैदिकसंस्कृतं पाणिनीयव्याकरणस्य प्रभावान्नूतनतया रूपायितमभूत्। वैदिककालस्य अन्तिमदशायां राजनैतिकस्थितेः परिवर्तनेन सामाजिकस्थितेरपि महत्परिवर्तनं परिलक्षितमभूत्। बाल्यावस्थायां नारीणां विवाहस्य परम्परा समारब्धा, या ह्यद्यापि एकविंशशताब्द्यामपि अपरिवर्तिता सती दरीदृश्यते। बालिकानां विवाहवशात् नारीणां शिक्षायामपि कुप्रभावः प्रपतितः। तेन अद्यत्वे समाजे शिक्षायाञ्च नारीणामवदानं क्रमह्रासमानं वर्तते। ईदृशावस्थायां कस्याश्चन महिलायाः कृते साहित्यरचनायाः अवसरो नितरां स्वल्पो वर्तते।

## 2.0. संस्कृतमहाकाव्यविरचने कवयित्रीणाम् अवदानम्

संस्कृतभाषायां काव्यरचनायाः प्रारम्भस्तावत् महर्षिणा वाल्मीकिना रामायणेन कृतः। कालिदासेन विरचितं रघुवंशं कुमारसम्भवं वेति महाकाव्यपरम्परायाः प्रकृष्टोदाहरणत्वेन ग्रहीतुं शक्यम्। संस्कृतसाहित्यमहाकाव्यपरम्परायां केवलयोः द्वयोः कवयित्र्योः महाकाव्ये द्वे अद्यत्वेप्युपलभ्येते। ते द्वेऽपि कवयित्र्यौ दक्षिणभारतीये आस्ताम्। ते हि - गङ्गादेवी रामभद्राम्बा चेति।

### (क) मधुराविजयम् (ऐतिहासिकं महाकाव्यम्)

'मधुराविजयम्' इति महाकाव्यं नवमसर्गात्मकम्। श्रीमत्या गङ्गादेव्या ग्रथितस्यास्य महाकाव्यस्य नामान्तरं हि वीरकम्परायचरितम् इति। इदं महाकाव्यम् New India Madras इत्याख्यायां पत्रिकायां प्रथमतया प्रकाशितमासीत्[1]। गङ्गादेवी चास्य महाकाव्यस्य नायकस्य अग्रमहिषी बभूव। राज्ञः कम्पनस्य वीरत्वं, पराक्रमः, कम्पराज्ञा चम्पराजस्य पराजयः, यवनराजवधः, विजयनगरदेशस्य तत्कालिकीनां सामाजिक-राजनैतिक-परिस्थित्यादीनां महाकाव्येऽस्मिन् वर्णनं विद्यते। राज्ञः कम्पनस्य कालस्तावत् 1377

1. *संस्कृत साहित्य की कवयित्रियाँ*, शिवानी मिश्रा, पृ. - 145 (Historical Mahākāvyas in Sanskrit, P. 321)

ईशवीयाब्दात् 1404 ईशवीयाब्दं यावत्[1]। अत एव गङ्गादेवी चतुर्दशशतकीया बभूव इति ज्ञायते।

इदं महाकाव्यं वीररसप्रधानं तथा वैदर्भीरीत्या ग्रथितम्। अत्र महाकाव्ये अनुष्टुप्-वसन्ततिलकोपजाति-वंशस्थल-मालिनी-हरिणी-द्रुतविलम्बितादिच्छन्दसां प्रयोगः दरीदृश्यते। तत्रैकः श्लोकः अनुप्रासालंकारेण शोभितो यथा -

**वरवधुपरिरम्भरसोल्लसितक्ललितकुटमलकष्टकिताकृति।**
**कुरवकः कुसुमेषुमवेतनेष्वपि विशृङ्गलवृत्तिमसूचयत्[2]॥**

## (ख) रघुनाथाभ्युदयम् (ऐतिहासिकं महाकाव्यम्)

द्वादशेषु सर्गेषु रचितस्य रघुनाथाभ्युदयमिति महाकाव्यस्य रचयिता तावत् ताञ्जो-प्रदेशस्य राज्ञो रघुनाथस्य महिषी रामभद्राम्बेति। इयं विदुषी अष्टसु भाषासु तथा चतुर्भिः प्रकारैः काव्यरचनायां पटीयसी आसीत्। राजा रघुः 1614 ईशवीयाब्दात् 1634 ईशवीयाब्दं यावत् शासनञ्चकार इति ऐतिहासिकानामभिमतम्। अत एव षोडशे शतके काव्यमिदं विरचितमिति मन्यते[3]। किंवदन्त्यनुसारम् एकदा राजा रघुनाथः राजसभायां 'किन्ते सन्तान पादयन्ते' इति पादपूरणार्थं अन्याः विदुषीः आह्वयत्। यत्र न कापि अस्य पूरणे समर्था आसीत् परं रामभद्राम्बा स्वप्रतिभाबलेन तमपूरयत्। स च श्लोकः

**कति कति नः क्षितिपतयः किं ते रघुनाथकायत्ते।**
**भुँवि बहवः किल तरवः किं ते सन्तान पादयन्ते[4]॥**

राजा रघुनाथः शक्तिमान्, पराक्रमी, दिव्यगुणयुक्तः, ऐश्वर्यवान्, धार्मिकः दानशीलश्चासीत्। तस्य सभायां स्त्रीणां भूयसी मर्यादासीत्। राजसभायां विदुष्यः कलानृत्यसङ्गीतादिषु पारङ्गता आसन्। महाकाव्यमिदं वैदर्भीरीत्या विरचितं वीररसप्रधानञ्च वर्तते। महाकाव्यस्य एकादशे सर्गे शृङ्गाररसस्य प्राधान्यं वर्तते। अन्ये च रसाः अङ्गरसत्वेन राजन्ते। महाकाव्येऽस्मिन् यमकरूपकोपमाद्यलंकाराणां भूरिशः प्रयोगः दरीदृश्यते। तत्र दिङ्मात्रमुदाहरणम् -

**पद्मरागमकुटेन भास्वता भास्वता तुलितभाजुषा व्यभात्।**
**रत्नकूटरमणीयविग्रहो रत्नसानुरिव राजशेखरः[5]॥**

---

1. *History of South India*, Vol. II, P. - 34
2. *मधुराविजयम्* (5.88)
3. *The Gazetteer of India*, Ed. P.H. Chopra, Ministry of Education and Social Welfare, 1973, P. - 305
4. *Raghunāthābhyudayam*, Ed. T.R. Chintamani, P. (ii)
5. *Raghunāthābhyudayam* (5.7)

श्लोकेऽस्मिन् उपमालङ्कारेण राज्ञः रघुनाथस्य वैभवशीलता चालंकृता वर्तते।

**(ग) रामायणस्य छायानुवादः**

मधुरावाणीत्यभिधेया विदुषी राज्ञः रघुनाथस्य राजसभामलङ्करोत्। व्याकरणशास्त्रे काव्यकृतौ च आसीत्सा तीक्ष्णधीः। तामिलभाषायां राज्ञा रघुनाथेन विरचितं रामायणमहाकाव्यम् संस्कृतभाषया अनूदितवती। परन्तु दौर्भाग्यवशात् अद्यत्वे ग्रन्थोऽयं नोपलभ्यते। 1980-ईशवीयाब्दे India Review इति ग्रन्थे तेलुगुभाषायां प्रकाशितं ग्रन्थमुपजीव्य डॉ. यतीन्द्रविमलचौधरीस्वरचिते Contribution of Women of Sanskrit Literature (Vol. IV) इति ग्रन्थे मधुरवाण्या उल्लेखः कृतः[1]।

रघुनाथस्य कालानुसारं काव्यमिदं सप्तदशशतकीयं वर्तते। सम्भवतः स मैसूरस्य राजा आसीत्। ग्रन्थमिमं विहायापि कुमारसम्भवस्य तथा नैषधीयचरितस्य छायानुवादोऽपि तया कृत इति विदुषां मतम्[2]। मधुरवाण्या अनूदिते रामायणमहाकाव्ये चतुर्दशसर्गाः तथा पञ्चशतोत्तरसहस्त्रं श्लोकाः सन्ति। मुख्यरामायणस्य द्वितीयकाण्डात् अयं छायानुवादः आरब्धोऽस्ति। अस्मिन् ग्रन्थे सम्पूर्णस्य रामायणस्य वृत्तान्तो न वर्णितोऽस्ति। हनुमतः सीतान्वेषणं सीतादर्शनं चेत्येतावत्पर्यन्तमत्र वर्णितमास्ते। बह्वीनां विदुषीणां स्तुतिरस्य महाकाव्यस्य प्रथमे सर्गे चित्रायिता वर्तते -

**विपञ्चिकायां चतुराः प्रगल्भाः शस्त्रेऽतिदक्षाः सरसप्रबन्धे।**
**समीपमेतस्य समेत्य सुभ्रूः जनाः स्वस्थकलाः व्यवृण्वन्[3]॥**

उक्तश्लोकादनुमीयते यत् तस्मिन् काले दक्षिणभारतीयस्त्रियः शिक्षिताः प्रभावशीलाः बभूवुः। एवञ्च तदा नारीणां गौरवस्तथा आदरः समाजे महान् आसीदित्यपि ज्ञायते।

**3.0. ध्रुपदीरूपकसाहित्ये चम्पूसाहित्ये च स्त्रीकवीणां कृतित्वम् -**

न केवलं महाकाव्ये, चापि ध्रुपदीसंस्कृतसाहित्ये विशेषेण चम्पूसाहित्ये रूपकसाहित्येऽपि स्त्रीकवीनां महती परम्परा वर्तते। अस्यां परम्परायां भट्टारिका, जयन्तीदेवी, तिरुमालाम्बा चोल्लेख्याः भवन्ति।

---

1. *Sanskrit Poetess*, Vol. IV, P. 39
2. *संस्कृत साहित्य की कवयित्रियाँ*, शिवानी मिश्रा, (द्रष्टव्यम्. *संस्कृत साहित्य का इतिहास*, सम्पा. वाचस्पति गैरोला, पृ. 871)
3. *रामायणम्* (1.78)

### 3.1. कौमुदीमहोत्सवः

संस्कृतनाट्यकृत्सु अनन्या स्त्रीनाट्यकृत् विजया भट्टारिका। तया विरचितस्य नाटकस्य नाम कौमुदीमहोत्सवः इति। ऐतिहासिकानां मते, सप्तमशतकस्य मध्यभागे सा जनिं लेभे। अस्यानाम विजया विज्जिका वेति विषये मतिमतां मतैक्य न वर्तते। द्वितीयपुलकेशिनो ज्येष्ठपुत्रस्य चन्द्रादित्यस्य महिषी विजया भट्टारिका आसीत्[1]। चन्द्रादित्ये दिवं गते पञ्चवर्षाणि यावदियं विदुषी राज्यं शशास इति ऐतिहासिकाः[2]।

नाटकमिदं पञ्चाङ्कात्मकम्। सुन्दरवर्मणः पुत्रः कल्याणवर्मा तथा च मथुरेश्वस्य कीर्तिसेनस्य पुत्री कीर्तिमती अस्मिन् नाटके नायकनायिके आस्ताम्। कल्याणवर्म-कीर्तिमत्योः प्रणयगाथा तथा चण्डसेनेन अपहृतस्य कल्याणवर्मणो राज्यस्य पुनःप्राप्तिस्तथा तत्राभिषेकस्य कथा अस्मिन् वर्णिता। कवयित्र्याः रचनारीतौ, वर्णविन्यासे तथा भावप्रकाशे कालिदासस्य प्रभावो दरीदृश्यते। दिङ्मात्रम् उदाहरणं तावत्

**इदं किलाविष्कृतकान्तिविप्लवं तुषारवातातपदर्शनेष्वपि।**
**शरीरमुधानशिरीषपेलवं तपोवनक्लेशसहं भविष्यति[3]॥**

अभिज्ञानशाकुन्तलस्य –

**इदं किलाव्याजमनोहरं वपुः तपःक्षमं साधयितुं य इच्छति।**
**ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति[4]॥**

इत्यस्य श्लोकस्य छायानुवादः विजयायाः कृते श्लोके दृश्यते। कौमुदीमहोत्सव-रूपकस्योल्लेखो विश्वनाथकविराजेन साहित्यदर्पणे षष्ठे परिच्छेदे कृतः।

### 3.2. आनन्दललिकाचम्पूः

आनन्दललिका इत्याख्यस्य चम्पूग्रन्थस्य कर्ता खलु श्रीकृष्णनाथचक्रवर्ती। तथापि ग्रन्थस्यास्य प्रस्तावनाभागं पठित्वा एतज्ज्ञायते यत् कविः स्वस्त्रियः जयन्तीदेव्याः साहाय्येन ग्रन्थस्यास्य रचना विहितेति 'श्रीदुर्गादासचक्रवर्तितनयेन पत्नीसहायेन कृष्णनाथकविना विरचितमानन्दलतिकाग्रन्थमधीतवानस्मि....'[5]।

---

1. *संस्कृत साहित्य की कवयित्रियाँ*, शिवानी मिश्रा, पृ. 209
2. तत्रैव (*A Comprehensive History of India*, Vol. III, Part - I, P. – 426)
3. *कौमुदीमहोत्सवः* (1.23)
4. *अभिज्ञानशकुन्तलम्* (1.17)
5. *आनन्दलतिका* (1. पृ. 2)

जयन्ती आसीत् मुरारभट्टस्य पुत्री। तस्याः वैजयन्ती इत्यपि नामान्तरं विद्यते[1]। जयन्तीदेवी पितुरेव संस्कृतमध्यगात्। मीमांसादर्शने तस्याः ज्ञानं प्रशंसार्हमासीत्[2]। ग्रन्थोऽयं कीदृश इति विषये विदुषां मतवैविध्यं वर्तते।

अस्मिन् ग्रन्थे पद्यस्यैव प्राधान्यात् काव्यम् इति शक्यं वाच्यम्। ग्रन्थस्यादावेव नाटक इव आमुखसंलापात् इदं पद्यात्मकं नाटकम् इति विवेचका वदन्ति। History of Sanskrit Literature इत्याख्ये ग्रन्थे समालोचकेन श्रीकृष्णमाचारियर्–महाभागेन ग्रन्थोऽयं चम्पूकाव्यत्वेन स्वीकृतः। तत्र तेनैका पङ्क्तिरुद्धृता – 'आनन्दलतिकाचम्पूयोर्नाकारि स्त्रिया सह'[3]। आनन्दललिकाख्यं चम्पूकाव्यं श्रीकृष्णनाथस्य स्वकृतित्वं न, अपि तु भार्या जयन्ती सहायिकारूपेण आसीत्। डॉ. यतीन्द्रविमलचौधुरी अपि चम्पूकाव्यत्वेन ग्रन्थममुं स्वीचकार[4]। ग्रन्थमिदं सप्तदशशतके विरचितमिति निस्सन्देहं वक्तुमलम्। ग्रन्थकृता स्वयं तस्यैवोल्लेखः कृतः[5]।

चैत्रमासस्य शुक्लपक्षस्य 1574–शकाब्दे अर्थात् 1652 ईशवीयाब्दे श्रीकृष्णनाथः आनन्दलतिकाख्यं काव्यं रचयामास। इदञ्च चम्पूकाव्यं पञ्चाङ्कात्मकम्। श्रीकृष्णनाथः आश्रयदातुः चिन्तामणेर्मनोविनोदनार्थं ग्रन्थमिमं जग्रन्थ। अस्मिन् चम्पूकाव्ये रेवायाः प्रणयो वर्णितः।

### 3.3.वरदाम्बिकपरिणयचम्पूः

वरदाम्बिकपरिणयचम्पूः इति काव्यस्य रचयित्री तिरुमलाम्बा। परिणयकथैव काव्यस्य उपजीव्यभूता। ग्रन्थोऽयं षोडशशतकस्य मध्यभागे ग्रथितः[6]। तिरुमलाम्बा विजयनगरस्य राज्ञः अच्युतरायराजसभायां सभाकविरासीदिति विदुषां मतम्। एतेन

---

1. *संस्कृत साहित्य की कवयित्रियाँ*, शिवानी मिश्रा, पृ.– 234 (*Sanskrit Drama and Dramaturgy*. P. 276)
2. तत्रैव (*History of Classical Sanskrit Literature*, P. 394)
3. तत्रैव (पृ. 235)
4. *Sanskrit Poetess*, Vol. II, Part - A, P. LVI
5. शाके वेद मुनीषुचन्द्रगणिते पक्षे वृक्षे मधौ
   श्रीमद्वन्द्यपदारविन्दयुगलं श्रीतर्कवागीश्वरम्।
   नत्वा श्रीद्विजकृष्णनाथवटुना काव्यं मया कल्पितम्
   दोषावेशमपास्य साधुहृदयैरास्वाद्यमेतच्चिरम्॥
6. *History of Classical Sanskrit Literature*, M.Krishnamachariar, (3rd Ed.) P. – 220

अनुमीयते यत्तत्काले महिलाकविभिः इतोऽपि अनेकानि काव्यानि रचितानि, परं तानि तु अद्यत्वे न लभ्यन्ते। तिरुमालाम्बायाः रूपगुणाभ्यां मोहितो राजा अच्युतरायः तां अग्रमहिषीरूपेण स्वीचकार। स्वगुणशोभिता कवयित्री सपत्नीषु ईर्ष्याद्वेषादिरहितया वरदाम्बिकया राज्ञः अच्युतस्य प्रणयगाथां स्वकाव्ये निरूपयामास[1]।

**उपसंहृतिः**

वैदिककालिकाणाम् ऋषीणां कृतिभिः आरब्धा कवयित्रीणां परम्परा अद्यावधि निरवच्छिन्नतया प्रहवतीति निश्चप्रचम्। परन्तु इदं सत्यं यत् कवयित्रीणां काव्यनिष्ठ-गुणविश्लेषणेन तथा संख्यागतदिशा समीक्षणेन वक्तुम् अलं यत् पुरुषकविवत् स्त्रीकवय एव स्वकारयितृप्रतिभया नूतनं साहित्यविश्वं विरचितवत्यः। परमेतत् सत्यं यत् साम्प्रतिके काले संस्कृतकवयित्र्यः पूर्वापेक्षया बहूनि मौलिकानि काव्यानि विरचयन्तीति महदाशा-व्यञ्जकमिति शम्।

**परिशीलिता ग्रन्थानुक्रमणी :**


1. द्विवेदी, मीरा. (2000) *आधुनिक संस्कृत महिला नाट्यकार*, दिल्ली : परिमल पब्लिकेशन्स, द्वितीय संस्करण।
2. बन्दोपाध्यायः, धीरेन्द्रनाथः (2014). संस्कृत वाङ्मयस्य इतिहासः, कोलकाता : संस्कृत पुस्तक भाण्डार, प्रथमसंस्करणम्।
3. मिश्रा, शिवानी (2019) *वैदिक कालीन विदुषियां*, दिल्ली : परिमल पब्लिकेशन्स, प्रथम संस्करण।
4. मिश्रा, शिवानी (2020) *संस्कृत साहित्य की कवयित्रियां*, दिल्ली : परिमल पब्लिकेशन्स, प्रथम संस्करण।
5. रामावतार (1933) *सदुक्तिकर्णामृतम्.* (सम्पा.) लाहोर : मोतीलाल वनारसीदास।
6. वैस, अरुणा कुमारी (2011) *अर्वाचीन संस्कृत साहित्य का काव्यशास्त्रीय अध्ययन*, दिल्ली : गुर्गा पब्लिकेशन्स, प्रथम संस्करण।
7. शुक्ल, दुर्गाचरण (2018) *ब्रह्मवादिनी-द्रष्ट मन्त्रभाष्य एवं अवदान*, दिल्ली : इस्टर्न् बुक लिंकर्स, प्रथम संस्करण।


---

1. *The Great Women of India*, Ed. Madhavananda, (2nd Ed.), P.- 334

8. Chopra, P.H. (1973). *The Gazetteer of India, Ministry of Education and Social Welfare*, New Delhi.

9. Choudhury, J.B. (1940). *Contribution of Women to Sanskrit Literature*, Volume I to VII, Calcutta.

10. Macdonell, A.A. (1900), *A History of Sanskrit Literature*, London.



श्रीवैष्णवी, वर्ष-2022, अंक-3 ISSN : 7552-2779

# पूर्वमीमांसाप्रकरणग्रन्थेषु धर्मलक्षणसमीक्षणम्

**डॉ. नागराजभट्टः***

**प्रबन्धसारः**

**'धर्मो विश्वस्य जगतः प्रतिष्ठा'** इति उपदिशन्ती श्रुतिः, सनातनधर्मः सकलजडाजडभूतराशेराधारो भवतीति प्रतिपादयति। स्वपराभ्युदयनिःश्रेयसहेतुः सनातनधर्मः। आत्मौपम्येन सर्वत्र समभाव एव सनातनधर्मस्य अभिव्यक्तस्वरूपमस्ति। अस्मिन्नाधुनिके काले धर्मशब्दस्य प्रयोगः क्वचित् सम्प्रदायः, शिष्टाचारः, मताचार इत्यादितात्पर्येण समुपलभ्यते। किन्तु आर्षग्रन्थावलोकनपूर्वकं धर्मशब्दार्थनिर्णयः नितान्तमपेक्षितो वर्तते। षट्सु आस्तिकदर्शनेष्वन्यतमं महर्षिजैमिनिना प्रवर्तितं पूर्वमीमांसादर्शनं वेदवाक्यार्थविचारमुखेन धर्मविचारमेव प्राधान्येन विदधाति। तस्मात्कारणात् पूर्वमीमांसाशास्त्रस्य प्रकरणग्रन्थदिशा धर्मस्वरूपविचारः प्रबन्धेऽस्मिन् समासेन प्रस्तूयते। प्रसङ्गसङ्गत्या सनातनधर्मस्य स्वरूपमपि किञ्चिद्विचार्यते।

## भूमिका

धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थ इति वैदिकदर्शनानां परमतात्पर्यं विद्यते। धर्माविरुद्धौ अर्थकामावपि चरमपुमर्थं प्रति पुरुषं नयतः इत्येतावता एव पुरुषार्थकोटौ धर्मस्य माहात्म्यं वरीवर्ति। भगवती श्रुतिरपि **"धर्मो विश्वस्य जगतः प्रतिष्ठा"**[1] इति चराचरात्मकस्य सर्वस्य जगतः प्रतिष्ठारूपो धर्म इति तत्स्वरूपं स्तौति। भगवता संस्थापितः, जगत्सृष्टिस्थितिलयकार्येषु नियामकः, स्थावरजङ्गमात्मकनिखिलभूतराशेः जीवनहेतुः, देशकालवस्तुपरिच्छेदे सत्यपि अविच्छिन्नतया अनुवर्तमानोऽयं सनातनधर्म इति नात्यन्तमेव अविदितचरं विदुषाम्। सनातनधर्मस्य स्रोतः अपौरुषेयो वेदराशिरेव। वेदस्य तात्पर्यार्थविज्ञानं पूर्वमीमांसादर्शनाधीनमेव भवति। तत्र धर्मप्रतिपादकानां वेदवाक्यानां

---

* सहायकाचार्यः, संस्कृतं एवं साहित्यविभागः, आर्.के.एम्.वी.ई.आर्.आई., बेलूर मठ

1. महानारायणोपनिषत् 79.7

तात्पर्यनिर्णयानुकूलाः न्यायाः पूर्वमीमांसकैः प्रदर्शिताः। एतेन धर्मस्वरूपनिरूपणमेव पूर्वमीमांसाशास्त्रस्य प्रयोजनम् इत्यपि सिध्यति।

**शब्दार्थः**

'धृञ् धारणे' इत्यस्माद्धातोः व्युत्पन्नो धर्मशब्दः धरति विश्वमित्यर्थे कोशग्रन्थेषु समुपलभ्यते। यः सर्वं चराचरात्मकं जगदिदं धरति, येन च इदं सर्वं धृतं सः सनातनो धर्मः। अतश्च धर्मः सकलाधारतया सर्वमिदं जगत् पुष्णातीति वक्तुं शक्यते। तदुक्तं महाभारते–

**धारणाद् धर्म इत्याहुः धर्मो धारयते प्रजाः।**
**यत्स्याद् धारणसंयुक्तः स धर्म इति निश्चयः॥**[1]

तस्मात् सर्वस्य जगतः प्रतिष्ठारूपः, परिपूर्णतया सकलभूतपुष्टिहेतुश्च इत्यस्मात्कारणात् सनातनधर्मः सकलधारणपोषणात्मना नितरां स्तूयते।

**विषयप्रवेशः**

षट्सु वैदिकदर्शनेषु पूर्वमीमांसादर्शनं महर्षिजैमिनिप्रवर्तितम् अनादिसंप्रदायप्रवर्धितं विशिष्टस्थानमावहति। उभयकाण्डात्मकस्य अपौरुषेयवेदराशेः तात्पर्यनिश्चयः पूर्वोत्तर-मीमांसादर्शनाभ्यां क्रियते। तत्रापि कर्मकाण्डात्मकस्य श्रुतिभागस्य तात्पर्यार्थविचारात्मकं पूर्वमीमांसादर्शनमिति ज्ञायते। **"अथातो धर्मजिज्ञासा"**[2] इति सूत्रयता जैमिनिना द्वादशाध्यायात्मकस्य पूर्वमीमांसादर्शनस्य मुख्यविचार्यविषयः "वेदोदितो धर्मः" एवेति कथ्यते। जिज्ञासासूत्रेऽस्मिन् अथ, अतः, धर्मजिज्ञासा चेति पदत्रयं विद्यते। तत्र "स्वाध्यायोऽध्येतव्य"[3] इति अध्ययनविधिवाक्यं जिज्ञासाधिकरणस्य विषयवाक्यं वर्तते। जिज्ञासासूत्रान्तर्गतस्य अथशब्दस्य वेदाध्ययनानन्तर्यमित्यर्थः सम्भवति। सूत्रान्तर्गतः अतःशब्दो वेदाध्ययनम् अर्थज्ञानरूपदृष्टफलहेतुरिति ब्रवीति। धर्मस्य जिज्ञासा धर्मजिज्ञासा। धर्मो नाम वेदस्य तात्पर्यार्थः। ज्ञानेच्छारूपायाः जिज्ञासायाः कृत्यजन्यत्वात्, जिज्ञासापदस्य तु विचाररूपार्थे लक्षणा स्वीक्रियते। अतश्च धर्मजिज्ञासा नाम वेदार्थविचार इत्यर्थः सिध्यति। अथ वेदाध्ययनानन्तरम्, अतो वेदाध्ययनस्य अर्थज्ञानरूपदृष्टफलकत्वात्, धर्मस्य वेदार्थस्य विचारः कर्तव्य इति पूर्वमीमांसाशास्त्रं धर्मविचारोद्देशमात्रेण प्रवृत्तमिति ज्ञायते। धर्मस्वरूपप्रतिपादनमेव पूर्वमीमांसाशास्त्रस्य प्रयोजनमिति निश्चीयते। तदुक्तं कुमारिलभट्टैः

1. महाभारतम् 69/58
2. जैमिनीयं पूर्वमीमांसासूत्रम् 1/1
3. तै.उ. 2.15.7

"धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्"[1] इति। अतश्च इह पूर्वमीमांसकानां प्रकरणग्रन्थानुसारं वेदप्रतिपाद्यलक्षणस्य धर्मस्य स्वरूपं निरूप्यते।

**पूर्वमीमांसाप्रकरणग्रन्थानुसारं धर्मलक्षणविचारः**

पूर्वमीमांसादर्शनप्रवर्तको जैमिनिः वेदतात्पर्यार्थलक्षणस्य धर्मस्य विचारार्थं द्वादशाध्यायात्मकं शास्त्रमुपदिश्य, तत्रादौ अथातो धर्मजिज्ञासेति धर्मविचारार्थमेव पूर्वमीमांसाशास्त्रं प्रवर्तत इति प्रतिजानीते। यदि धर्मविचारः कर्तव्यः तर्हि धर्मो नाम कः? धर्मस्य लक्षणं किम्? तत्र प्रमाणं किम्? चेति बोद्धव्यं भवति। "यागादिरेव धर्मः" इति धर्मस्य स्वरूपं निश्चीयते। विहितकर्मजन्यम् अपूर्वमेव धर्मं मन्यन्ते गौतमीयाः, किन्तु पूर्वमीमांसकमते वेदविहितो यागादिरेव मुख्यतया धर्मः इत्युच्यते।

पूर्वमीमांसादर्शनदिशा धर्मलक्षणं प्रकरणग्रन्थेषु मीमांसापरिभाषादिषु उपलभ्यते। तत्र श्रीकृष्णयज्वप्रणीतायां मीमांसापरिभाषायां धर्मलक्षणं प्रोक्तं यथा **"वेदबोधितेष्ट-साधनताको धर्मः"**[2] इति। आपदेवविरचिते मीमांसान्यायप्रकाशे तु **"वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थः धर्मः"**[3] इति धर्मलक्षणं प्रतिपादितम्। लौगाक्षिभास्करेण विरचिते अर्थसङ्ग्रहे तल्लक्षणं प्रोक्तं **"वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः"**[4] इति। अथेदानीं प्रकरणग्रन्थत्रयस्याभिप्रायम् वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः इत्यत्रैव सङ्कलय्य, तदर्थविचारः क्रियते।

वेदप्रतिपाद्यत्वे सति प्रयोजनवत्त्वे च सति अर्थवत्त्वं धर्मस्य लक्षणमित्यर्थः। तत्र अर्थवत्त्वं नाम श्रेयस्साधनत्वमित्यर्थः। अस्य धर्मलक्षणस्य लक्ष्ये यागहोमादौ समन्वयः कर्तव्यः। "यजेत स्वर्गकामः" इत्यादिवेदवाक्यैः प्रतिपाद्यमानेषु यागहोमादिषु वेदप्रतिपाद्यत्वमस्ति। स्वर्गादिप्रयोजनवन्तश्च इमे यागा इत्यतः, एतेषु प्रयोजनवत्त्वरूपं लक्षणमपि अन्वेति। एते यागाः नरकादिरूपाशुभफलहेतवः न भवन्तीति, श्रेयस्साधनत्वेन तेषां यागानाम् अर्थत्वमपि सिद्धम्।

अव्याप्त्यादिलक्षणदोषनिवर्तकतया धर्मलक्षणान्तर्गतदलानाम् सार्थक्यं वक्तव्यम्। धर्मलक्षणे वेदप्रतिपाद्यत्वरूपदलाभावे भोजनादिलौकिककर्मसु अपि धर्मलक्षणमतिव्याप्तं स्यात्। अतः वेदप्रतिपाद्यत्वमिति विशेषणेन लौकिककर्मसु धर्मत्वाशङ्का व्यावर्त्यते। पूर्वोक्तधर्मलक्षणे प्रयोजनवत्त्वरूपदलाभावे स्वर्गपुत्रपश्वादियागजन्यफलेषु वेदप्रतिपाद्यत्वम्

1. श्लोकवार्तिकम्-11
2. मीमांसापरिभाषा- पृ.सं-1
3. मीमांसान्यायप्रकाशः-पृ.सं-1
4. अर्थसंग्रहः पृ.सं 11

अर्थत्वं चास्तीति हेतोः यागजन्यफलेष्वपि धर्मलक्षणस्यातिव्याप्तिप्रसङ्गः स्यात्। अतः धर्मलक्षणे प्रयोजनवत्त्वविशेषणेन सोऽपि अतिव्याप्तिदोषः निरस्तः। वेदप्रतिपाद्यः सर्वोऽपि धर्मः न भवेत्, किन्तु यश्च धर्मत्वेन अङ्गीकृतः सः वेदप्रतिपाद्यः श्रेयस्साधनश्च भवेदिति मीमांसकानामाशयः। अतः धर्मलक्षणघटकत्वेन अर्थत्वानुपादाने सति श्येनादौ अनर्थहेतौ धर्मत्वप्रसङ्गः, तत्र वेदप्रतिपाद्यत्वस्य प्रयोजनवत्त्वस्य च सम्भवात्। "श्येनेनाभिचरन् यजेत" इति श्रुत्या अभिचारफलकः श्येननामको यागः विहितः। अभिचारो नाम शत्रुवधानुकूलव्यापार इति यावत्। शत्रोरपि वधः फलतः अशुभफलहेतुत्वात् अनर्थ एव भवति। वेदप्रतिपाद्यत्वात् प्रयोजनवत्त्वाच्च अनर्थहेतुः श्येनयागोऽपि धर्मः स्यात्। अतः श्येनयागादौ अनर्थहेतौ धर्मलक्षणस्य अतिव्याप्तिवारणाय अर्थत्वमिति निवेशितम्। अतश्च वेदप्रतिपाद्यत्वे प्रयोजनवत्त्वे च सति अर्थत्वं धर्मत्वमिति धर्मलक्षणं निर्दुष्टमुपपन्नम्।

### जैमिनीयसूत्रदिशा धर्मलक्षणविचारः

पूर्वमीमांसादर्शनप्रवर्तको जैमिनिः **"चोदनालक्षणोऽर्थो धर्मः"**[1] इति धर्मस्वरूपं निर्वक्ति। चोदनाशब्दस्य विधिः इत्यर्थः शास्त्रे निर्णीतः। जैमिनिसूत्रानुसारं विधिप्रतिपादितो धर्मो भवति। अपौरुषेयो वेदः पूर्वमीमांसाशास्त्रकारैः विधिमन्त्रनामधेयनिषेधार्थवादाः चेति पञ्चधा विभक्तः।अतश्च सूत्रानुसारं विधिरूपवेदैकदेशगम्यो धर्म इत्युक्तं भवति। सूत्रोक्तस्य धर्मलक्षणस्य पूर्वग्रन्थप्रतिपादितस्य धर्मलक्षणस्य च मिथः विरोधः सम्भवतीति न वाच्यम्। समग्रस्य वेदस्य धर्मतात्पर्यवत्त्वेन सूत्रस्थचोदनाशब्दस्य वेदमात्रपरत्वमिति धर्मलक्षणे अविरोधः सम्पादितः पूर्वमीमांसाशास्त्रकारैः।

चोदनालक्षणोऽर्थः श्रेयस्करो भवति। यश्च श्रेयस्कर स एव धर्मशब्देनोच्यते। तदुक्तं **शबरस्वामिना- "य एव श्रेयस्कर स एव धर्मशब्देनोच्यते। कथम्? अवगम्यताम्, यो हि यागमनुतिष्ठति, तं धार्मिक इति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते। यथा पाचको लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते।"**[2] अतश्च 'वेदप्रतिपाद्यः प्रयोजनवदर्थः धर्मः' इत्येव शास्त्रीयं लक्षणं वितन्यते।

### सनातनधर्मस्य स्वरूपम्

पूर्वमीमांसादर्शनस्य प्रकरणग्रन्थानुसारं धर्मस्वरूपं विविच्य, अथ प्रसङ्गसङ्गत्या

---

1. जैमिनीयं पूर्वमीमांसासूत्रम्- 1/2
2. शाबरभाष्यम् - पृ.सं.- 80

तत्सम्बद्धं किञ्चिद्विचार्यते। भारतीयसंप्रदाये सनातनधर्मः व्यष्टिसमष्टिदिशा "विशेषधर्मः सामान्यधर्मः" चेति द्वेधा विभज्य प्रदर्श्यते। यः सर्वान् उद्दिश्य तारतम्यं विनैव कर्तव्यतया विहितः सः सामान्यधर्मो भवति। 'मा हिंस्यात् सर्वा भूतानि', "सत्यं वद, धर्मं चर, स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्"[1] इत्यादीनि श्रुतिवाक्यानि सर्वजनसाधारणतया नियमान् उपदिशन्ति। प्रतिव्यक्ति तरतमभावेनविहितो वर्णाश्रमकर्तव्यरूपो विशेषधर्म इत्युच्यते। चतुर्विधवर्णाश्रमनियमान् यथायोग्यम् अनुसरन्तः शिष्टाः जनाः सामान्यधर्मनिष्ठा एव भवेयुरिति सनातनधर्मस्य वैशिष्ट्यम्। विशेषधर्मपरिपालनं नाम न सामान्यधर्मोल्लङ्घनम्। सनातनधर्मस्य समष्टिदृष्टिः सामान्यधर्मः। तस्यैव व्यष्टिदृष्टिः विशेषधर्मः। अतश्च व्यष्टिसमष्टिदिशा सामान्यविशेषधर्मप्रकारः सनातनधर्मस्यैव सम्भवति।

सनातनधर्मः सर्वेषामुद्धारहेतुः सर्वजनसाधारणो वर्तते। यः सर्वविधजनसमुदायस्य कर्तव्यत्वेन सामाजिकनियमत्वेन च प्रवर्तमानः अविशेषविधिः सः सामान्यधर्म इत्युच्यते। आत्मौपम्येन सर्वत्र समभाव एव सनातनधर्मस्य अभिव्यक्तस्वरूपम् अस्ति। सर्वत्र आत्मदृष्टिः, अभेदबुद्धिः, परोपकारः, सर्वभूतेषु अद्रोहश्च सनातनधर्मस्य प्रत्यक्षलिङ्गानि भवन्ति। स्वपराभ्युदयनिःश्रेयसहेतुः सनातनधर्मः। आत्मनो मोक्षार्थं चेदपि जगतः हिताय भवेदिति तात्पर्यम्।

**उपसंहारः**

**'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्'**[2] इति मनुवचनमनुसृत्य अपौरुषेयशब्दराशिः वेद एव सनातनधर्मस्य स्त्रोतः इति वक्तुं शक्यते। व्यष्टिसमष्टिदृष्ट्या विहितयोः विशेषसामान्यधर्मयोः 'सामान्यधर्म' एव सनातनधर्मस्य सारः भवति। पूर्वमीमांसकाः यागादिरेव धर्मः इति प्रतिपादयन्तोऽपि सामान्यधर्मातिरिक्तस्य यागविशेषस्य वेदप्रतिपाद्यत्वे सत्यपि धर्मत्वं नास्तीति निरूपयन्ति। इत्थं पूर्वतन्त्रस्य प्रकरणग्रन्थानाम् अवलोकनेन वेदप्रतिपाद्यप्रयोजनवतः अर्थस्य यागादेरेव धर्मत्वं निश्चितमिति शम्।

**अनुशीलितग्रन्थाः**

1. डॉ. गजाननशास्त्री (सम्पादकः), (1979), ***मीमांसादर्शनम्-1***, वाराणसी, भारतीयविद्याप्रकाशनम्।
2. वाचस्पति उपाध्यायः व्याख्याता, (2019), ***अर्थसङ्ग्रहः***, वाराणसी, चौखम्बा ओरियन्टालिया।

1. तैत्तिरीयोपनिषत् 1/11/1
2. मनुस्मृतिः- 2/6

3. डॉ. श्रीरामः, (2017), ***अर्थविवृतिः***, तिरुपतिः, श्रीवेङ्कटेश्वरवेद-विश्वविद्यालयः।

4. डॉ. राजेश्वरशास्त्री (सम्पादकः), ***अर्थसङ्ग्रहः***, वाराणसी, चौखम्बासंस्कृत-संस्थानम्।

5. पं. रामनामदीक्षितः (सम्पादकः), ***मीमांसान्यायप्रकाशः***, वाराणसी, चौखम्बा-संस्कृतसंस्थानम्।

6. नित्यानन्दपन्तः (सम्पादकः), (1915) ***मीमांसापरिभाषा***, वाराणसी, चौखम्बा-संस्कृतसंस्थानम्।



# अनुचन्द्रिकं पूर्वत्रासिद्धमिति सूत्रमीमांसा

**डॉ. लेखरामः दन्नाना***

वेदाङ्गेषु प्रधानं वर्तते व्याकरणशास्त्रम्। यद्यपि जगति विद्यन्ते नैकानि व्याकरणानि तथापि लौकिकवैदिकोभयप्रतिपादकत्वात् पाणिनीयं मूर्धन्यं स्थानम् अलङ्कुरुते। अद्यत्वे अस्य पाणिनीयस्य अध्ययनाध्यापनप्रक्रिया द्विविधा वर्तते। आद्या अष्टाध्यायीक्रमानुसारिणी, द्वितीया व्युत्क्रमप्रयोगानुसारिणी च। तत्र द्वितीयक्रमे अध्ययनाध्यापने प्रसिद्धः ग्रन्थः वर्तते भट्टोजिदीक्षितविरचितः वैयाकरणसिद्धान्तकौमुदी। ग्रन्थस्यास्य विलसन्ति नैकानि व्याख्यानानि। बालमनोरमा, तत्त्वबोधिनी, प्रौढमनोरमा, लक्ष्मी इत्यादीनि। एतेषु विद्यमानेषु व्याख्यानेषु प्रसिद्धं वर्तते नागेशाचर्यकृतः लघुशब्देन्दुशेखरः। अस्य ग्रन्थस्य बहूनि व्याख्यानानि सन्ति। यथा- चिदस्थिमाला, अभिनवचन्द्रिका, गुरुप्रसादः इत्यादीनि। उपलभ्यमानेषु व्याख्यानेषु हयग्रीवाचार्यप्रणीता व्याख्या चन्द्रिका प्रसिद्धा। इयं व्याख्या पञ्चसन्ध्यन्तपर्यन्ता वर्तते। अस्यां व्याख्यायां नागेशाचार्यसिद्धान्तानां सम्यक् विचारः कृतः वर्तते।

### चन्द्रिकाकारः हयग्रीवाचार्यः

शेखरव्याख्यायाः चन्द्रिकायाः कर्त्ताऽस्ति हयग्रीवाचार्यः। नवदशशताब्दौ आचार्योऽयं प्रादुर्भूतः स्यात्। प्रायशः अयं 1825 संवत्सरतः 1900 मध्यकालिकः स्यादिति ऐतिह्यविदामभिप्रायः। हयग्रीवाचार्यः आन्ध्रप्रदेशस्य गद्वलसंस्थानवासी। यतो हि प्रायशः 1850 प्रान्ते मुष्टिपल्लिः रामभूपालः गद्वलसंस्थानपालनं चकार। तस्य शासनकाले बहवः कविपण्डिताः संस्थानेऽस्मिन् सुपोषिताः। तेष्वन्यतमोऽयं वैयाकरणमूर्धन्यः हयग्रीवाचार्यः। चन्द्रिकाव्याख्यारम्भे उक्तम्-

**नत्वा श्रीकेशवं देवं रामगोपालमानितः।**
**हयग्रीवसुधीश्रेष्ठः प्रणमत्यञ्जनासुतम्॥**

---

* सहायकाचार्यः, संस्कृतभाषा, भाषाविज्ञानविभागः, भाषाविद्यापीठम्
महात्मा-गांधी-अंतरराष्ट्रीय-हिन्दी-विश्वविद्यालयः, वर्धा

**गद्वालकेशवप्रीत्यै हयग्रीवसुधामणिः।**
**शब्देन्दुशेखरव्याख्यां कुरुते चन्द्रिकाभिधाम्।।**[1]

काश्यमेकः काशीनाथः इति सुप्रतिष्ठितः काशीनाथशास्त्री अस्य हयग्रीवाचार्यस्य गुरुः। व्याख्यात्रा चन्द्रिकायां तत्र तत्राऽयं निर्दिष्टः। यथा– "समासकृतनियम-प्रयोजननिरूपणे" "सुपः श्रवणानापत्तिः" इति ग्रन्थव्याख्याने "मूलकेनोपदंशमित्यत्र प्रातिपदिकत्वेऽव्ययत्वादौत्सर्गिकवचनस्य निर्बाधत्वेन तन्निरूपिताङ्गावयवत्वाल्लुगापत्त्या समासपदमावश्यकमिति काशीनाथोपाध्यायाख्यगुरव इति ज्ञेयम्" इत्युक्तं चन्द्रिकाकृता। "उपाध्याय" इति पदेन बहुधा स्मृताः काशीनाथशास्त्रिणः।

काशीनाथशास्त्रिणः शिष्येषु बालशास्त्री अन्यतमः। चन्द्रिकायां बालशास्त्री अपि व्याख्यात्रा तत्र तत्र स्मृतः। तद्यथा– **तस्माच्छसो नः पुंसि**[2] इति सूत्रव्याख्याने उक्तञ्च बालोपाध्यायैः–

**तस्माच्छसो नः पुंसीति सूत्रे तस्मात्पदं वृथा।**
**अकश्शसो नङादेशे हरीनित्यपि सिध्यति।।** इति।

किञ्च **"नामीति**[3]**"** सूत्रव्याख्याने "विप्रतिषेधवार्त्तिके नुम् पदमावश्यकमिति बालमुकन्दशास्त्रिणः" इति। कदाचिद् अयं बालशास्त्री हयग्रीवाचार्यस्य सतीर्थ्यः स्यात्।

**चन्द्रिकावैशिष्ट्यम्**–

लघुशब्देन्दुशेखरव्याख्यानेषु चन्द्रिकाव्याख्यानं विशिष्टं वर्तते। व्याख्यानेऽस्मिन् "इन्द्रास्तु" इति केषाञ्चिन्मतं प्रदर्शितम्। एवमन्यत्रापि "अत्रेन्द्राः" इत्यादिना तन्मतं प्रस्तुतम्। बालमुकन्द–उदयङ्करपाठकभैरवमिश्रादीनां व्याख्यानेऽस्मिन् तत्र तत्र प्रस्तावः कृतः। शेखरव्याख्याने गुरुप्रसादशेषे अयं हयग्रीवाचार्यः स्मृतः। तद्यथा– तत्र स्वादिसन्धिप्रकरणे "हयग्रीवस्तु आदेशद्वयस्य एकस्थानिकत्वं केवलत्वं निमित्तानन्तर्यरूपं त्वन्यदित्यनयो-र्भेदमाह" इति।

मम गुरुचरणैः श्रीपादसत्यनारायणमूर्तिभिरपि स्वकीये बालबोधिनीव्याख्याने **"ङमो ह्रस्वादचि ङमुण् नित्यम्**[4]**"** इति सूत्रव्याख्यानसन्दर्भे चन्द्रिकाकारस्य मतं प्रस्तावितम्। तद्यथा– माषाणां कुम्भ इत्यादिषष्ठीतत्पुरुषवृत्तिघटकत्वस्य कुम्भशब्दे सत्त्वेऽपि ततः

1. लघुशब्देन्दुशेखरस्य चन्द्रिका व्याख्या.-1
2. अष्टाध्यायीसूत्रपाठः 6.1.103
3. तत्रैव 6.4.3
4. तत्रैव 8.3.32

पश्चात् कस्यापि शब्दस्याभावेन स्वघटकार्थवदव्यवहितपूर्वत्वस्य तत्राभावात् एकसत्वेऽपि द्वयं नास्तीति प्रतीत्या न निरुक्तसम्बन्धेन कुम्भशब्दस्य वृत्तिवैशिष्ट्यमिति मध्यमत्वानाक्रान्तात् प्रत्ययलक्षणनिषेधप्रवृत्तौ तदप्रवृत्तये कार्यित्वनिवेश आवश्यक इति चन्द्रिकादिषु स्पष्टम् इति। एवं बहुविशेषभूषितेयं चन्द्रिका व्याख्या शेखरमर्मज्ञापिका पण्डितहृदयहारिणी भवतीत्यत्र नास्ति मनागपि सन्देहः।

## पूर्वत्रासिद्धमिति सूत्रमीमांसा

**पूर्वत्रासिद्धम्**[1] सूत्रमिदमसिद्धत्वबोधकम्। पूर्वत्र, असिद्धम् इति पदविभागः। 'पूर्वत्र' इति अव्ययपदम्, 'असिद्धम्' इति प्रथमैकवचनम्। पूर्वत्र इत्यत्र **यस्य च भावेन भावलक्षणम्**[2] इति सूत्रेण सप्तमीं विधाय ततः **सप्तम्यास्त्रल्**[3] इत्यनेन त्रल् प्रत्यये 'पूर्वत्र' इति रूपम्। सूत्रे अस्मिन् सति सप्तमी। सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रम् असिद्धं स्यादिति सूत्रार्थः। एवंरूपेण अर्थस्वीकारेण **पूर्वत्रासिद्धम्** इति विधिसूत्रं वा अधिकारसूत्रं वेति प्रश्नः जायते। तस्य विधित्वे सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा इत्येव अर्थः स्यात् न तु त्रिपाद्यामपि पूर्वं प्रति परम् असिद्धमिति। अर्थद्वयलाभाय अस्य अधिकारत्वमङ्गीकृतम्। अन्यथा "गोधुङ्मान्" इत्यत्र गावः दुह्यन्ते अत्र इत्यर्थे मतुप्प्रत्यये गोदुह् मत् इत्यवस्थायां घत्वजश्त्वानुनासिकेषु कृतेषु झषन्तत्वाभावेन भष्भावानापत्तिरिति दोषः प्रदर्शितः शेखरकृता।[4] तद्व्याख्याने चन्द्रिकायां भष्भावसम्पादनाय विचारः प्रवृत्तः। तथाहि– गोदुह् मत् इत्यवस्थायाम् आदौ घत्वे कृते ततः झषन्तत्वात् भष्भावः भवत्येवेति तदनापत्तिरूपदोषः नास्तीति वक्तुं न शक्यते। कृताकृतप्रसङ्गित्वेन जश्त्वस्य नित्यत्वात् भष्भावात् पूर्वं जश्त्वमेव प्रवर्तते। पुनः शङ्का क्रियते अस्तु नाम जश्त्वस्य नित्यत्वम्, परनित्यादिषु अपवादस्य बलवत्त्वेन अपवादत्वात् नित्यमपि जश्त्वं बाधित्वा भष्भाव एव भवतीति न च वाच्यम्। घत्वात् पूर्वं हकारावस्थायामपि जश्त्वप्राप्तियोग्यतायाः सत्त्वेन तदानीं झषन्तत्वाभावेन भष्भावस्य प्राप्तिर्नास्ति। किञ्च बुध्यतेः क्विपि भुत् इत्यादौ जश्त्वभष्भावयोः समानकालप्राप्तिकस्थले जश्त्वबाधनेन भष्भावस्य चरितार्थतया तद्गतापवादत्वम् अप्रयोजकम्। पुनः शङ्का क्रियते हकारस्य घत्वे कृते तदुत्तरम् जश्त्वानुनासिकयोः उभयोः प्रसक्तौ सत्यां तयोर्मध्ये अनुनासिकस्य नित्यत्वात् तस्यैव प्रवृत्तेः उचितत्त्वेन घत्वानन्तरं जश्त्वकरणम् असङ्गतमिति

1. अष्टाध्यायीसूत्रपाठः 8.2.1
2. तत्रैव 2.3.7
3. तत्रैव 5.3.10
4. लघुशब्देन्दुशेखरः पृ.सं. 72

चेदुच्यते– अनुनासिकस्य नित्यत्त्वेऽपि अपरनिमित्तकत्त्वेन जश्त्वस्य अन्तरङ्गत्वात् तेन नित्यस्यापि अनुनासिकस्य बाधः। पुनः आशङ्क्यते जश्त्वस्य उक्तरीत्या अन्तरङ्गत्वं भवतु नाम तथापि तत्तु त्रिपाद्यां वर्तते। कार्यकालपक्षे त्रिपाद्याम् अन्तरङ्गपरिभाषा न प्रवर्त्तते इति सिद्धान्तितत्त्वेन जश्त्वस्य अन्तरङ्गत्वमप्रयोजकमिति चेत् उच्यते– जश्त्वानुनासिकयोः द्वयोरपि त्रैपादिकत्वेन **पूर्वत्रासिद्ध**मित्यस्य विधित्वपक्षे त्रिपाद्यां पूर्वं प्रति परमसिद्धमित्यर्थस्य अभावेन जश्त्वानुनासिकयोः उभयोरपि अन्तरङ्गबहिरङ्गभावस्य सत्त्वात् विधित्वपक्षे कार्यकालपक्षे त्रिपाद्यां बहिरङ्गपरिभाषायाः प्रवृत्तिस्वीकारेण अन्तरङ्गे जश्त्वे कर्त्तव्ये बहिरङ्गस्य अनुनासिकस्य असिद्धत्वं युज्यते। त्रिपाद्यां कार्यकालपक्षे बहिरङ्गपरिभाषा न प्रवर्तते इति सिद्धान्तः **पूर्वत्रासिद्धमित्यस्य** अधिकारत्वपक्षे इति चन्द्रिकाकृता स्पष्टीकृतम्। वस्तुतस्तु **पूर्वत्रासिद्धम्** इत्यस्य अधिकारत्वमिति सिद्धान्तितत्त्वेन अलीकं विधिपक्षमादाय अयं विचारः प्रवृत्तः इति बोध्यम्। वस्तुतः गोधुङ्मान् इत्यत्र घत्त्वे कृते **झयः**[1] इति सूत्रेण वत्त्वापत्तिः दोष इति मूले उक्तम्। भष्भावनापत्तिरूपदोषं परित्यज्य वस्तुतः इत्यादिना दोषान्तरदाने किं बीजमिति चन्द्रिकाकृता स्पष्टमुल्लिखितम्। पूर्वोपस्थितिकत्वेन जश्त्वस्य अन्तरङ्गत्वेऽपि तस्य अपवादत्वापेक्षया प्राबल्याङ्गीकारे दृढतरयुक्तेरभावेन जश्त्वं बाधित्वा अपवादत्वात् भष्भावः भवत्येवेति तदनापत्तिरूपदोषः नास्ति। न च उक्तरीत्या भष्भावस्य जश्त्वापवादत्वाङ्गीकारे अपवादत्वात् जश्त्वं बाधित्वा प्रथमतः भष्भावः तदुत्तरं तेन बाधितं जश्त्वं न स्यादिति वाच्यम्। बाधकं द्विविधम्– येन नाऽप्राप्तन्यायेन अपवादत्वरूपं बाधकमेकम्। अयं बाध्यबाधकभावः तक्रकौण्डिन्यन्याय-सिद्धः। अनेन बाधे सति अपवादप्रवृत्त्युत्तरं योग्यतायाः सत्त्वेऽपि उत्सर्गस्य प्राप्तिर्न भवति। निरवकाशत्वात् बाधकमिति द्वितीयः प्रकारः। अयं माठरकौण्डिन्यन्यायसिद्धः। बाधकप्रवृत्त्युत्तरम् उत्सर्गशास्त्रस्य प्राप्तियोग्यतासत्वे तदवश्यं भवत्येव। प्रकृते निरवकाशत्वात् बाधकत्वम्। ततश्च भष्भावप्रवृत्त्यनन्तरं बाधितमपि जश्त्वं निमित्तसद्भावात् भवत्येव। एवम् अनुनासिकापेक्षया अपरनिमित्तकत्त्वेन अन्तरङ्गत्वात् अनुनासिकात् पूर्वं भष्भावः प्रवर्तते। एवञ्च अपवादत्वान्तरङ्गत्वाभ्यां क्रमेण जश्त्वानुनासिकौ बाधित्वा भष्भावप्रवृत्तिः निराबाधैवेति नास्ति तदनापत्तिरूपदोष इति सर्वं मनसि निधाय वस्तुतः इत्यादिना दोषान्तरमुक्तवान् शेखरकार इति ग्रन्थतात्पर्यं प्रदर्शयामास हयग्रीवाचार्यः।[2]

**विप्रतिषेधे परं कार्यमिति**[3] सूत्रविषये यथोद्देशपक्षः स्वीक्रियते इति व्यवस्थापितम्। अत एव विप्रतिषेधे परम् इति त्रिपाद्यां न प्रवर्तते। विप्रतिषेधसूत्रविषये कार्यकालपक्षस्वीकारे

1. अष्टाध्यायीसूत्रपाठः 8.2.10
2. लघुशब्देन्दुशेखरः पृ.सं. 74
3. अष्टाध्यायीसूत्रपाठः 1.4.2

तु परस्यासिद्धत्वेऽपि सापादिकस्य विप्रतिषेधसूत्रस्य सिद्धत्त्वात् परिभाषान्तरणामिव अस्यापि कार्यकालपक्षे तेन आकर्षणापत्तिरिति शेखरे प्रतिपादितम्। सपादीस्थविप्रतिषेध–सूत्रदृष्ट्या त्रिपाद्याः असिद्धत्वेऽपि त्रिपादीदृष्ट्या विप्रतिषेधसूत्रस्य सिद्धत्वेन त्रैपादिकेन विधिना विप्रतिषेधशास्त्रस्य आकर्षणापत्तिरिति अधिकारत्वपक्षेऽपि मनोरथादौ उत्वादिकं न स्यादिति विप्रतिषेधसूत्रस्य कार्यकालत्वं स्वीकर्तुं न शक्यते इति मूलपङ्क्तेरर्थं व्याख्यातवान् चन्द्रिकाकारः। एतद्विषये कश्चन विचारः कृतः। विप्रतिषेधसूत्रविषये कार्यकालपक्षस्वीकारेऽपि दोषो नास्ति। पूर्वं प्रति परस्यासिद्धत्वेन पूर्वस्य परविषयकज्ञानाभावेन ज्ञातयोरुभयोरेव विप्रतिषेधस्य सम्भवेन प्रकृते तदभावात् त्रिपाद्यामुपस्थितमपि विप्रतिषेधशास्त्रम् अकिञ्चित्करमिति वक्तुं शक्यत्वेन कार्यकालपक्षे विप्रतिषेधसूत्रस्य त्रिपाद्यां प्रवृत्तावपि दोषो नास्तीति न च वक्तुं शक्यते। पूर्वपरयोः उभयोः शास्त्रयोः प्रवृत्तयोः परमेव भवतीति विप्रतिषेधशास्त्रस्य नियामकत्वेन पूर्वशास्त्रस्य प्रवृत्तेरभावात् पूर्वत्रेति निमित्तग्रहेण **पूर्वत्रासिद्धमित्यस्य** अप्रवृत्तिः। न च अन्यत्र चरितार्थयोः द्वयोः पूर्वपरशास्त्रयोः एकस्मिन् लक्ष्ये परस्परविरोधेन अप्रवृत्त्यापत्तौ तयोर्मध्ये किं शास्त्रं प्रवर्तितव्यमिति संशये प्रथमोपस्थितत्वात् पूर्वशास्त्रप्रवृत्तिरित्यर्थः **पूर्वत्रासिद्धे नास्ति विप्रतिषेधः**[1] इत्यस्य उपपादनीयतया मनोरथादौ उत्वादिसिद्धया विप्रतिषेधसूत्रविषये कार्यकालपक्षस्वीकारेऽपि न दोष इति वाच्यम्। ग्रन्थकर्तुः मते प्रथमोपस्थितेः नियामकत्वं नाश्रितम्। ततश्च पर्यायेण पूर्वपरशास्त्रप्रसक्तौ मनोरथादौ क्वचित् रेफलोपापत्तिः। विप्रतिषेधसूत्रविषये यथोद्देशपक्षाश्रयेण तु तस्य अप्रवृत्त्या **पूर्वत्रासिद्धमिति** शास्त्रमेकमेव प्रवर्त्तत इति परस्यासिद्धत्त्वेन पूर्वस्यैव प्रवृत्त्या मनोरथादौ उत्वादिकं सिध्यति। रेफलोपाद्यापत्तिरपि नास्ति इति शेखरग्रन्थं समर्थयामास चन्द्रिकाकारः।

पूर्वत्रासिद्धमिति अधिकारसूत्रम्। तच्च **हो ढः**[2] इत्यादौ शास्त्रासिद्धत्वम् उत कार्यासिद्धत्वमिति विचारः उपतिष्ठते। वाक्यभेदेन अन्वेति। हस्य ढः भवति इदञ्च शास्त्रं पूर्वत्रासिद्धमिति। वाक्यभेदेन अन्वयस्वीकारादेव **न मु ने**[3] इत्यादिभिः तन्निषेधः उपपद्यते इति मूले उक्तम्। एतद्व्याख्याने पदैकवाक्यतया अन्वयो वा वाक्यैकवाक्यतया अन्वयो वेति विचारः प्रवृत्तः चन्द्रिकायाम्। यद्यपि वाक्यैकवाक्यतया अन्वयापेक्षया पदैकवाक्यतापक्षे लाघवमस्ति तथापि पदैकवाक्यता पक्षे **"अदसोऽसेर्दादुदोमः"**[4] इति सूत्रस्य पूर्वशास्त्रनिरूपितासिद्धत्वविशिष्टः उकारः मकारश्च अदसः दस्य तदुत्तरस्य

1. व्याकरणमहाभाष्यम्, सूत्रम्. 8.2.1
2. अष्टाध्यायीसूत्रपाठः 8.2.31
3. तत्रैव 8.2.3
4. तत्रैव 8.2.80

च भवतीत्यर्थो वक्तव्यः। तथा अर्थे ज्ञाते **"न मु ने"** इति निषेधसूत्रेण मुभावसम्बन्धासिद्धत्त्वे निषिद्धे तत्सन्नियोगशिष्टमुभावस्यापि निवृत्तिप्रसङ्गेन घिसञ्ज्ञासम्पादनाय स्थानि-प्रयुक्तकार्यवारणाय च आरभ्यमाणस्य **"न मु ने"** इति सूत्रस्य वैयर्थ्यं स्यात्। यदि तत्सूत्रारम्भसामर्थ्यात् सन्नियोगशिष्टन्यायस्य अनित्यत्वं कल्प्यते तर्हि पदैकवाक्यतापक्षे कार्यासिद्धत्वमायातमिति महान् उपद्रवः। वाक्यैकवाक्यतापक्षे तु इष्टकार्यसम्पादनाय शास्त्रासिद्धत्वम् अङ्गीकर्तुं शक्यते। किञ्च पदैकवाक्यतापक्षस्वीकारे भुक्तवन्तमिति न्यायविरोधात् **"न मु ने"** इति निषेध एव अनुपपन्नः स्यात्। वाक्यार्थबोधं प्रति पदार्थज्ञानस्य कारणत्वेन **न मु ने** इति निषेधवाक्यार्थबोधाय तद्घटकमुशब्दार्थज्ञानमपेक्षते। तदर्थम् **अदसोऽसेरिति** वाक्यार्थपर्यालोचनं कार्यम्। तेन असिद्धत्वविशिष्टं मुत्त्वं विधीयते इति तदुत्तरं **"न मु ने"** इति सूत्रेण असिद्धत्वनिषेधेऽपि भुक्तवन्तमिति न्यायविरोधात् तन्न स्यात्। वाक्यैकवाक्यतापक्षे तु वाक्यभेदेन असिद्धत्वस्य मुभावविशेषणत्वाभावेन **पूर्वत्रासिद्धमित्यनेन** मुत्वस्य असिद्धत्वे प्रसक्ते **"न मु ने"** इत्यनेन तन्निषेधः उपपद्यते। एवञ्च पदैकवाक्यतापक्षे भुक्तवन्तमिति न्यायविरोधः वाक्यैकवाक्यतापक्षे तु तन्नास्तीति मनसि निधाय ग्रन्थकृता उपपद्यते इत्युक्तमिति चन्द्रिकाकारः शेखरकाराशयं स्पष्टीचकार।[1]

अपवादस्य यं प्रति अपवादत्वं तत्र असिद्धत्वाभावेऽपि अन्यत्र असिद्धत्वं भवत्येवेति शेखरग्रन्थः। पूर्वत्रासिद्धमिति सूत्रस्य अधिकारसूत्रत्वेन त्रिपाद्याम् उत्तरसूत्रेषु अनुवर्तते। तत्सूत्रं यत्र यत्र अनुवर्तते तच्छास्त्रं परशास्त्रमसिद्धं भवतीति तत्र-तत्र अर्थबोधो जायते इति तदर्थः। एतद्ग्रन्थव्याख्याने चन्द्रिकाकृता महान् विचारः कृतः। **हो ढः**[2] इति सूत्रेण ढत्वं विधीयते। **दादेर्धातोर्घः**[3] इति सूत्रेण घत्वं विधीयते। घत्वविधायकशास्त्रदृष्ट्या ढत्वविधायकं पूर्वं शास्त्रम्। ततश्च ढत्वं प्रति घत्वस्य असिद्धत्त्वेन यत्र यत्र ढत्वस्य प्रवृत्तिः तत्र सर्वत्रापि यदि ढत्वं स्यात्तर्हि घत्वविधानं व्यर्थमेव स्यादिति घत्वविधानसामर्थ्यात् अपवादस्थले असिद्धत्वबाधः कल्पनीयः। **पूर्वत्रासिद्धम्** इति सूत्रसामान्यमुखेन असिद्धत्वबोधकं वा विशेषरूपेण तत्तच्छास्त्रं प्रति असिद्धत्वबोधकं वेति प्रश्नः? यदि सामान्यमुखेन असिद्धत्वबोधकं स्यात्तर्हि घत्वारम्भसामर्थ्यात् तत्र **पूर्वत्रासिद्धमित्यस्य** अप्रवृत्त्या ढत्वं प्रति यथा घत्वस्य असिद्धत्वं नास्ति तथा वत्वं प्रत्यपि असिद्धत्वं न स्यादिति गोधुङ्मान् इत्यत्र **झयः**[4] इति सूत्रेण वत्वापत्तिः दोषः। अतः विशेषरूपेण तत्तच्छास्त्रं प्रत्येव असिद्धत्वं वक्तव्यम्। ततश्च

1. लघुशब्देन्दुशेखरस्य चन्द्रिका व्याख्या. पृ. 76
2. अष्टाध्यायीसूत्रपाठः 8.8.31
3. तत्रैव 8.2.32
4. तत्रैव. 8.2.10

ढत्वं प्रति घत्वस्य असिद्धत्वाभावबोधनेऽपि वत्वं प्रति असिद्धत्वं भवत्येवेति न तदापत्तिर्दोषः। अत्र शङ्का क्रियते बाधकत्वं द्विधा दृश्यते– यत्र निरवकाशत्वात् बाधकत्वं तत्र अपवादस्य आरम्भसामर्थ्यात् तत्र उत्सर्गशास्त्रदृष्ट्या अपवादस्य असिद्धत्वबाधः भवतु नाम। यत्र तु येन नाप्राप्तन्यायेन बाधकत्वं तत्र अपवादस्य असिद्धत्वं भवत्येव। तस्य असिद्धत्वात् पूर्वस्य सामान्यशास्त्रस्य प्रवृत्त्युत्तरं निमित्तसत्त्वे अपवादस्यापि कर्तुं शक्यत्वेन तत्र स्थले अपवादस्य वैयर्थ्याभावेन तत्सामर्थ्यात् तस्य असिद्धत्वे बाधकल्पनं न युज्यते। ततश्च तत्र अपवादत्वमेव न भवतीति चेत् उच्यते– **प्रकल्प्य चापवादविषयं ततः उत्सर्गः प्रवर्त्तते**[1] इति न्यायेन प्रथमतः वाक्यार्थबोधस्य आवश्यकत्वेन उत्सर्गशास्त्रस्य तदतिरिक्तविषयकत्त्वेन अपवादविषये उत्सर्गशास्त्रस्य स्वतः प्रवृत्त्यभावेन पूर्वत्रासिद्धमिति शास्त्रप्रवृत्तौ पूर्वपरयोः द्वयोः अपेक्षितत्वेन प्रकृते पूर्वत्रेत्यस्य अभावात् असिद्धसूत्रं न प्रवर्तते। येन नाप्राप्तन्यायेन बोधकस्थले अपवादस्य असिद्धत्वाभावः **असिद्धवदत्राभात्**[2] इति सूत्रप्रत्याख्यानभाष्येणभण्यत इति व्याख्यात्रा स्पष्टीकृतम्। शास् धातोः लोटि मध्यमपुरुषे एकवचने शास्हि इति स्थिते **"शा हौ"**[3] इति सूत्रेण शासः "शा" इत्यादेशे तस्य प्रतिपदविधित्वेन असिद्धत्वात् झलन्त–लक्षणधिभावस्यसिद्धिरिति प्रयोजनम् "आहौ" इति न्यासेन साधितम्। तेन शासः उपधायाः इत्वबाधकम् अकारं विधाय झलन्तत्वं संरक्ष्य **"धि च"**[4] इति सूत्रेण शकारलोपे शाधि इति रूपं साधितम्। आहौ इति न्यासेन विधीयमानः आकारः येन नाप्राप्तिन्यायेन धिभावस्य अपवादः स्यादिति उक्तस्य प्रयोजनस्य असिद्ध्या कथं प्रत्याख्यानमिति शङ्का उदेति? स च शङ्का अवश्यं परिहर्त्तव्या न्यासकारेण। सूत्रपक्षेऽपि येन नाप्राप्तिन्यायेन शादेशस्य धिभावबाधकत्वं कुतो न भवतीति शङ्का उदेति। पक्षद्वयेऽपि शङ्कायाः सत्त्वेन उभाभ्यामपि सत्यपि सम्भवे बाधनं भवतीति न्यायः त्याज्यः। इत्थम् आरम्भवादिना प्रत्याख्यानवादिना च न्यायत्यागस्य अवश्यं कर्त्तव्यत्त्वेन सूत्रप्रत्याख्यानं सम्यगेवेति प्रत्याख्यातवादिनः अभिप्रायः कल्पनीयः। येन नाप्राप्तन्यायेन अपवादस्थले उत्सर्गं प्रति अपवादस्य असिद्धत्त्वं स्यात् तर्हि सूत्रारम्भवादिमते शादेशधिभावयोः परस्परं प्रति असिद्धत्वेन उत्सर्गापवादप्रसक्तेरभावेन शादेशधिभावयोः समावेशः सिध्यति। प्रत्याख्यानवादिमते असिद्धत्वाभावेन आकारधिभावयोः बाध्यबाधक–भावस्य सत्वेन तयोः समावेशः न सिध्यतीति प्रत्याख्यातवादिना इहैव सत्यपि सम्भवेबाधनं

1. परि.शे.प.सं. 64
2. अष्टाध्यायीसूत्रपाठः 6.4.22
3. तत्रैव 6.4.35
4. तत्रैव 8.2.25

भवतीति न्यायानाश्रयणं वक्तव्यं न तु आरम्भवादिनेति प्रत्याख्यानं गौरवग्रस्तम्। अपवादविषयं परित्यज्य ततः उत्सर्गः प्रवर्त्तते इति वक्तुः मते आरम्भप्रत्याख्यानवादिनोः द्वयोरपि लौकिकन्यायानाश्रयणं समानमिति प्रत्याख्यानं सङ्गच्छते। तस्मात् निरवकाशत्वेन बाधकस्थले उत्सर्गनिरूपितासिद्धत्वं **पूर्वत्रासिद्धमिति** शास्त्रेण वा **असिद्धवदत्राभात्** इत्यनेन वा न भवतीति चन्द्रिकाकृता विशेषः प्रदर्शितः।[1]

**पूर्वत्रासिद्धमिति** सूत्रे असिद्धपदवाच्यं किमिति विचारः। सिद्धशब्दस्य निष्पन्नं प्रवृत्तमित्यर्थः सिद्धश्च प्रत्ययविधौ इत्यादौ तथादर्शनादिति मूले शेखरकृता उक्तम्।[2] इदं वचनं कुत्र वर्त्तते किमस्य तात्पर्यमिति व्याख्यात्रा स्पष्टीकृतम्। भस्याऽढे तद्धिते पुंवद्भावसिद्धश्च प्रत्ययविधाविति भाष्यवार्त्तिकम्।पटुशब्दात् ङीष्प्रत्यये ततः हितार्थे तद्धितप्रत्ययः कर्तव्यः। अत्र भसंज्ञानन्तरं पुंवद्भावो वा पुंवद्भावात् पूर्वं भसंज्ञा वेति विचारः। भसंज्ञानन्तरं पुंवद्भाव इति चेत् पट्वीशब्दादिभ्यः हितार्थे जायमानः यत्प्रत्ययो न सिध्यति। पुंवद्भावात् पूर्वं उवर्णान्तत्वाभावेन **उगवादिभ्यो यत्**[3] इति सूत्रस्य प्राप्त्यभावात्। किन्तु छप्रत्यय एव स्यादिति प्रत्ययोत्पत्तेः पूर्वमेव भाविभत्वमादाय पुंवद्भावं साधयितुं सिद्धश्च प्रत्ययविधाविति वार्त्तिकमारब्धम्। प्रत्ययविधानसमये पुंवद्भावः यथा सिद्धो भवेत् तथा कर्त्तव्य इति वार्त्तिकार्थः। अत्र वार्त्तिके सिद्धशब्दः उत्पन्नार्थकत्त्वेन दृष्ट इति मूलपङ्क्तेराशयं स्पष्टीचकार व्याख्याकारः चन्द्रिकाकारः[4]। एवं रीत्या चन्द्रिकाकारेण स्वव्याख्याने नागेशस्य सिद्धान्ताः सम्यग् विचारिताः, स्वस्याभिमतं च प्रकटीकृतं वर्तते। पूर्वेषाम् आचार्याणां सिद्धान्तज्ञानाय एतादृशानां चन्द्रिकादिव्याख्यानानां विशिष्टं महत्त्वं विद्यते, अतः एतानि व्याख्यानानि सम्यक् अध्येतव्यानि।

**परिशीलितग्रन्थसूची–**

1. अष्टाध्यायी, महर्षिपाणिनिप्रणीतः, रामलाल कपूर ट्रस्ट, बहलगढ़, (हरियाणा), 1988.
2. अष्टाध्यायीसूत्रपाठः, महर्षिपाणिनिप्रणीतः, दीक्षितपुष्पाकृतप्रकरणनिर्देशसमन्वितः, संस्कृतभारती, (नवदेहली), 2010
3. धातुपाठः, महर्षिपाणिनिप्रणीतः, रामलाल कपूर ट्रस्ट, बहलगढ़, (हरियाणा), 2006.

1. लघुशब्देन्दुशेखरस्य चन्द्रिका व्याख्या. पृ. 78
2. लघुशब्देन्दुशेखरः पृ.सं. 72
3. अष्टाध्यायीसूत्रपाठः 5.1.2
4. लघुशब्देन्दुशेखरस्य चन्द्रिका व्याख्या. पृ. 78

4. वैयाकरणसिद्धान्तकौमुदी, भट्टोजिदीक्षितः, (वासुदेवदीक्षितप्रणीतबालमनोरमाटीकया समलंकृता दीपिकाख्या हिन्दिव्याख्या समन्विता) सं. गोपालदत्त पाण्डेयः, चौखम्बासुरभारतीप्रकाशन, वाराणसी,2008.

5. वैयाकरणसिद्धान्तकौमुदी, भट्टोजिदीक्षितः, (वासुदेवदीक्षित प्रणीत बालमनोरमा-व्याख्या अर्थप्रकाशिका नामक हिन्दी व्याख्या तथा संस्कृतरूपसिद्धिसहित) व्या. डॉ.अर्कनाथ चौधरी, जगदीश संस्कृत पुस्तकालय, जयपुर, 2013.

6. लघुशब्देन्दुशेखरः, महामहोपाध्यायनागेशभट्टविरचितः, (पञ्चसन्ध्यन्तः सुबोधिनीहिन्दीव्याख्योपेतः) व्या. आचार्य विश्वनाथमिश्रः, चौखम्बासंस्कृतप्रतिष्ठान नई दिल्ली, 2008

7. लघुशब्देन्दुशेखरः, महामहोपाध्यायनागेशभट्टविरचितः (बालबोधिनीभाव-बोधिनीव्याख्याद्वयोपेतः) व्या.सं. आचार्य श्रीपादसत्यनारायणमूर्तिः, राष्ट्रियसंस्कृत-विद्यापीठम् तिरुपतिः, 2001.

8. लघुशब्देन्दुशेखरः, महामहोपाध्यायनागेशभट्टविरचितः (चन्द्रिकामञ्जरी-व्याख्याद्वयोपेतः) व्या.सं. आचार्य श्रीपादसत्यनारायणमूर्तिः, राष्ट्रियसंस्कृत-विद्यापीठम् तिरुपतिः, 2012.

9. लघुसिद्धान्तकौमुदी, वरदराजाचार्यविरचिता, (भैमी व्याख्या) नचिकेता भाटिया गांधीनगर, दिल्ली 2005.

10. काशिकावृत्तिः, वामनजयादित्यौ, व्या. पं. ईश्वरचंद्रः, चौखम्बासंस्कृतप्रतिष्ठान नई दिल्ली, 2010.

11. पाणिनीयव्याकरणमहाभाष्यम्, महर्षिपतंजलिविनिर्मितम्, (श्रीमन्नागेशभट्टविरचित-भाष्यप्रदीपोद्योतभासितेन श्रीमदुपाध्यायकैयटप्रणीतेन भाष्यप्रदीपेन समुल्लसितम्) चौखम्बासंस्कृतप्रतिष्ठान नई दिल्ली, 2004.



# षड्दर्शनानि तत्र विशिष्टाद्वैतसिद्धान्तश्च

**डॉ. बी. केशवप्रपन्नपाण्डेयः***

प्राचीनभारतीयदार्शनिकप्रमुखाः पदवाक्यप्रमाणपारावारपारीणाः भगवद्रामानुज-शङ्करमध्वप्रभृतयोऽनेके पूज्यतमा आचार्याः पारमार्थिककल्याणावाप्तिविरतान् भगवद्विमुखान् स्वपारमार्थ्यहितमप्यजानतः सदा लौकिकक्षुद्रकामादिदोषसंलग्नान् वराकाञ्जीवानुद्धर्तुका-मास्ततो निर्हेतुककृपया ब्रह्मतत्त्वं विचारयितुं प्राथम्येन स्वयमेव औपनिषदस्याद्भुत-परमात्मतत्त्वस्यात्मसाक्षिकानुभविरूपेण स्थितास्तत्र वेदान्तप्रतिपादिततत्त्वानि सम्यग् सरलया सरण्या निरूप्य सर्वशास्त्राणां तेष्वेव प्रयोजनीयत्वमुपलम्भयन्तः स्वीयैः निगमान्तसारभूतैः द्वैताद्वैतविशिष्टाद्वैताख्यमहद्भिर्दर्शनैः निर्हेतुक्यया च करुणया प्राणिजातानामात्यन्तिक-दुःखनिवृत्तिपूर्वकमोक्षसाधनस्वरूपाणि सविस्तरं निरूपयन्तोऽन्ततो तैर्मोक्षञ्च पुमर्थत्वेनोररी-कृतवन्तस्तादृशा महानुभावाः, तादृशानि वस्तुतत्त्वगहनमननसमृद्धान्येतानि दर्शनान्येव सम्प्रदायपरम्परयोत्तरकाले वैदिकानां परमजीवातुभूताः प्रमुखवैदिकमतप्रख्याता विराजन्ते।

तत्र- **'दृश्यते ज्ञायतेऽनेन'** इति व्युत्पत्त्या दर्शनशब्देन सम्यक् ज्ञानसाधनं दर्शनशास्त्रमुपलभ्यते तथाहि आत्मतत्त्वस्य दर्शनसाधनरूपेण श्रवणमनननिदिध्यासनानि आम्नातानि बृहदारण्यकोपनिषदि **'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'**[1] इति। उक्तञ्च कठोपनिषदि- **'दृश्यते त्वग्रया बुद्ध्या सूक्ष्मयासूक्ष्मदर्शिभिः'**[2] एवं विचारसहकृतं बौद्धिकात्मतत्त्वसाक्षात्कारपर्यवसानमेव दर्शनशास्त्रमिति, वृहदारण्यकश्रुतेः कठश्रुतेश्च सिध्यति। अतश्च श्रुतेः प्रामाण्यमुररीकृत्य तर्कनिष्ठतत्त्वविचारे प्रवृत्तानि यथा आस्तिकदर्शनानि तथा वेदप्रामाण्यमनुररीकारि-

---

* सहायकाचार्यः, संस्कृतविभागः, द्वारकादास गोवर्धन दास वैष्णव कॉलेज, अरुम्बकम्, चेन्नई-106

1. श्रीमद्विश्वक्सेनाचार्यप्रणीतगूढार्थदीपिकाव्याख्यया समन्विता -बृहदारण्यकोपनिषगद्, 2-4-5 सम्पा. डॉ. सुदामा सिंह, श्रीमहालक्ष्मीनारायण यज्ञसमिति, वाराणसी, द्वितीयावृत्तिः, वि.सं -2054, पृ.सं.- 97
2. कठोपनिषद्, 1-3 प्रकाशन गीताप्रेस, गोरखपुर, तृतीयावृत्तिः, 2008, पृ.सं.- 23

बौद्धादिनास्तिकदर्शनान्यपि भारतीयदर्शने दर्शनशब्दाभिधेयानि दृश्यन्ते। सर्वेषामेव एतेषां दर्शनानां बोधिनिष्ठविचारात्मकतत्त्वानु-सन्धानपर्यवसानत्वमेव लक्ष्यम्।

तादृशानामेव प्राचीनकाले आध्यात्मिकतत्त्वविवेचकैः महर्षिभिः स्वयमनुभूतस्यैव (तत्त्वस्य) याथार्थ्यस्य दर्शनेषु उद्घोषणं कृतम्। तैः तपसा स्वाध्यायबलेन च आध्यात्मिक-तत्त्वानां चिन्तनं विधाय (प्रकृतेः) संसाररहस्योद्घाटनं कृतम्। जीवितस्य लक्ष्यं किम्? तत् साधयितुमुपायाः के? इत्येवमादीनां प्रश्नानां समाधानरूपेण दर्शनानि आविरभूवन्। लौकिकप्रत्यक्षद्वारा (बाह्येन्द्रियैः) सत्यस्य साक्षात्कारो न भवतीति तपस्विनः योगिनः स्वयोगबलेन बाह्येन्द्रियाणामन्तःकरणस्य च जयेन (निरोधेन) तत्त्वं ज्ञातुं प्रभवन्ति स्म। यमनियमादिभिः अन्तःकरणस्य शुद्धौ सत्यामेव चिद्दर्पणे आत्मनः बिम्बः प्रतिफलति। अतः योगसाधनद्वारा अन्तःकरणशुद्धिरावश्यकीति महर्षिणां मतम्। किञ्च आत्मदर्शनस्य श्रवण-मनन-निदिध्यासनानि त्रीण्येतानि साधनानि साधारणहेतव उच्यन्ते। तदुक्तम् -

**श्रोतव्य श्रुतिवाक्येभ्यः मन्तव्यश्चोपपत्तिभिः।**
**मत्वा च सततं ध्येयम् एते दर्शनहेतवः।।**[1] इति।

किञ्च श्रवणानन्तरमेव दार्शनिकालोचना भवतीति-

**पदचर्चेयमीशस्य मननव्यपदेशभाक्।**
**उपासनैव क्रियते श्रवणानन्तरागता।।**[2] इति।

इमानि च दर्शनानि प्रथमं महर्षिभिः सूत्ररूपेण निबद्धानि। तेषां रहस्यानां विवरणार्थमनन्तरकाले वार्तिकानि, भाष्याणि च लिखितानि।

**दर्शनविभागः-**

दर्शनकर्तृषु केचन स्वबुद्धिबलेनैव अर्थाद् वेदोक्तमार्गमपहायैव संसारस्य मूलकारण-मन्वेष्टुं प्रवृत्ताः। अत एव नास्तिका इत्युच्यन्ते। **नास्ति परलोके मतिः यस्य सः नास्तिक** इति व्युत्पत्त्या "अस्ति नास्ति दिष्टं मति" इति सूत्रेण ठक्प्रत्यये निष्पन्नमिदं रूपम्। तेषां दर्शनानि च नास्तिकदर्शनानि इत्युच्यन्ते।

नास्तिकदर्शनानि षट् वर्तन्ते। तानि च -

---

1. संख्यप्रवचनभाष्यम्, पृ.सं.-02
2. न्यायकुसुमाञ्जलिः, श्लोक सं-03, पृ.सं.-78

1. **चार्वाकदर्शनम्**
2. **बौद्धदर्शनम्**
3. **जैनदर्शनम्**
4. **दिगम्बरदर्शनम्**
5. **आर्हतदर्शनम्**
6. **सौमदर्शनम्**

एतानि वेदप्रामाण्यमनङ्गीकुर्वद्भिः रचितानि। अन्ये तु केचन बुद्धिमन्तः एवं मन्यन्ते यत् पुरुषबुद्धेः भ्रमप्रमादादिदोषभूयिष्ठत्वेन केवलबुद्धिबलेन यद्भावितं तत् सत्यं न भवेत्। अस्माकमुपलभ्यमानेषु ग्रन्थेषु वेदा एव पुरातनाः। पुरुषप्रयत्नानपेक्षेणैवा-विर्भूताः। अतः पुरुषबुद्धिकृतभ्रमप्रमादादिदोषरहिताः स्वत एव प्रमाणं भवन्ति। तादृशवेदोक्तमार्गानुसारेणैव अस्माभिः ऊहः कर्तव्यः। तद्विरुद्धाः सर्वेऽपि दुरुहाः त्याज्याः इति वदन्ति। एते एव आस्तिकाः, एतेषां दर्शनानि च आस्तिकदर्शनानि इति व्यवह्रियन्ते। आस्तिकदर्शनानि षट् वर्तन्ते। तेच –

1. **न्यायदर्शनम्**
2. **वैशेषिकदर्शनम्**
3. **सांख्यदर्शन**
4. **योगदर्शनम्**
5. **पूर्वमीमांसादर्शनम्**
6. **उत्तरमीमांसादर्शनम्**

षडेतानि दर्शनानि वेदप्रामाण्यमङ्गीकुर्वद्भिः लिखितानि। एतानि मोक्षस्वरूपं, तत्साधनानि च दर्शयन्ति। षण्णामेषां दर्शनानां महर्षिभिः सूत्राणि, वार्तिकानि, भाष्याणि च लिखितानि दृश्यन्ते। यथाक्रमं परिशीलयामः।

### षड्दर्शनानि-वार्तिककर्तारः- भाष्यकर्तारश्च[1]-

1. न्यायसूत्राणां रचयिता अक्षपादमहर्षिःगौतमः भाष्यकारः वात्स्यायनः। वार्तिककारश्च उद्योतकरः।
2. वैशेषिकसूत्रकर्ता महर्षिःकणादः। भाष्यकारः प्रशस्तपादः। वार्तिककर्ता जगदीशः।

---

1. श्रीमत्सायणमाधवाचार्यप्रणीतसर्वदर्शनसङ्ग्रहः

3. सांख्यसूत्रकारः महामुनिः कपिलः। भाष्यकारो विज्ञानभिक्षुः। वार्तिककाराः अविरुद्धादयः।

4. योगसूत्रकारो भगवान्पतञ्जलिः। भाष्यकारः व्यासः। वार्तिककारश्च विज्ञानभिक्षुः।

5. पूर्वमीमांसासूत्रकारः जैमिनिमहर्षिः। भाष्यकारः शबरस्वामी। वार्तिककारश्च कुमारिलभट्टः।

6. उत्तरमीमांसादर्शनस्य सूत्रकारः भगवान्व्यासः। भाष्यकाराः शङ्करभगवद्रामानुज-मध्वप्रभृतयः। वार्तिककाराश्च तत्तन्मतानुसारमनेकाः। एवं बहुविधैः भाष्य-व्याख्यानादिभिः निबद्धानि दर्शनानि प्राचीनकाले भारतीयानां दार्शनिकदृष्टेः क्रमविकासं सूचयन्ति। एतानि षड्दर्शनानीति लोके प्रसिद्धानि जातानि।

**विशिष्टाद्वैततत्त्वम्**[1] -

तत्र विशिष्टाद्वैतसिद्धान्तस्त्वनादिकालात्प्रवर्तमानः सन् भगवद्रामानुजाचार्यैरभिवर्धितः दिग्दिगन्तेषु च प्रचारितश्च। लक्ष्मणमुनीन्द्राः बहोः कालादनुवर्तमानमेतन्मतं स्वीयनवमणिकल्पनवश्रीभाष्यादिदिव्यग्रन्थैरविचाल्यं कल्पान्तस्थायि चाकुर्वन्। तत्र विशिष्टाद्वैतमितोपि पुष्कलयितुं जगत उपकाराय च बहवो महाचार्याः अवतरन्। तेषु नाथमुनीनां यामुनाचार्याणाञ्च विशिष्टं स्थानं वर्तते। नाथमुनयः श्रीवैष्णवमतहर्म्यस्य स्थाणुरिव भूत्वा स्वभूरिप्रयत्नैरपरिमितज्ञानैश्च मतमेतं दृढं चक्रुः। अत एव हेतोः नाथोपज्ञं प्रवृत्तं इति मतस्यास्य नाथोपज्ञत्वादिप्रसिद्धिः। यामुनाचार्यैरपि मतस्यास्य प्रचाराय महान् अविरतं परिश्रमोऽकारि। आचार्यास्त्वेते स्वीयप्रकृष्टोपयोगिरचनाभिः मतस्यास्य कृते महत्प्रचारं कृत्वा विशिष्टाद्वैतसिद्धान्तस्य शाश्वतिकं स्थानं दापयामासुः। यामुनाचार्याणां परोक्षशिष्याः भगवद्रामानुजाचार्याः ब्रह्मसूत्राणां श्रीभाष्यनाम्ना प्रसिद्धां विपुलां व्याख्यां रचयामासुः। पश्चात् गीताभाष्यं वेदार्थसङ्ग्रहः इत्यादीन् प्रस्थान् ग्रन्थान् विरच्य स्वीयं मतं कल्पान्तस्थायि चाचीकरन्।

तत्र तत्त्वं नाम वस्तूनां अविपरीतयथावस्थितवस्तुस्वरूपम्। तच्च समस्तचेतनाचेतन-शरीरकं निखिलहेयप्रत्यनीकं कल्याणगुणमहोदधिनारायणाख्यदेवताविशेषरूपपरब्रह्मैव भवति। हितं नामचेतनानुष्ठेयपरमपुरुषार्थप्राप्त्युपायभूतो भगवद्भक्तिप्रपत्तिरूपज्ञानविशेषः। स च वेदान्तविहितः। पुरुषार्थश्च निःशेषाविद्यानिवृत्तिपूर्वक-वैकुण्ठाख्य-देशविशेषप्राप्तिसमनन्तरं जीवनस्य परिपूर्णब्रह्मानुभवरूपस्वभावाविर्भावः इति वेदान्तैरुच्यमानः विषयः। एतादृशार्थ-बोधकानां उपनिषदामर्थाः बाह्यैः कुदृष्टिभिश्च व्याकुलीकृताः। तेन व्याकुलमन्दमतयो

1. आचार्यशिवप्रसादसंपादित-श्रीभाष्यम्, पृ.सं.-12

जनाः स्वात्माजीवनमार्गमविज्ञाय संसारमरुकान्तारे जन्मसन्ततिभिः परिभ्रमन्तो विषीदन्ति। तद्दृष्ट्वा एतादृशान् स्वेच्छाप्रवृत्तिमतो विरुद्धानुष्ठानपरांश्च चेतनान् स्वधर्मे प्रवर्तयितुं नरो नारायणश्च भूत्वा भूमावतीर्य शिष्याचार्यधर्मान् स्वयमनुष्ठाय प्रादर्शयत्। पुनश्च नैकधावततार तानेतान् सत्पथे प्रवर्तयितुं पौनःपुन्येन। तत्राप्यसाधारणैः धर्मैरस्य परत्वं विज्ञाय अभाग्याश्चेतनाः सुदूरङ्गताः। ततश्च मनुष्यसजातीयोऽजनि रामकृष्णादिरूपेण। तत्रापि ते मनुष्यास्तं भगवन्तं नैवागणयन् यतोऽसौ अतिमानुषैः समुद्रबन्धनादिभिर्दिव्यैः व्यापारैः, निहीनैरपि कपिस्नेहादिभिः कदाचित् स्वस्य परत्वम्, अन्यदावरत्वञ्च प्रकटीचकार, तथापि तदीयनिर्हेतुकीम् अनुकम्पामजानतो मूढान् मोक्षोन्मुखिनः कर्तुं निखिलजनता-समुज्जीवनार्थी भगवान् विष्णुः स्वयं द्वापरयुगे सत्यवत्यां पराशरात् बदरीद्वीपे बादरायणमहर्षि-रूपेणावतरत्। तदा ब्रह्मसूत्राणि विरचय्य बाह्यकुदृष्टिवादिनिरासपूर्वकम् अज्ञानसंशय-सम्भावनाद्यनवकाशतया सूत्राक्षरैः तत्त्व-हित-पुरुषार्थान् वेदान्तप्रतिपन्नान् प्रबोधयामास।

**श्रीभाष्यसारः**[1] -

श्रीमद्भगवद्रामानुजविरचितग्रन्थेषु प्रमुखतमः ग्रन्थः श्रीभाष्यग्रन्थः। अस्मिन् ग्रन्थे चत्वारः अध्यायाः सन्ति। समन्वयाध्यायः, अविरोधाध्यायः, साधनाध्यायः, फलाध्यायः चेति। प्रत्येकस्मिन्नध्याये चत्वारः पादाः सन्ति।

तत्र विष्णुपुराणभारतभगवद्गीताद्युपब्रह्मणोदाहरणपूर्वकं सम्यङ्न्यायकलापेन च द्वाभ्यां द्विकाभ्यां, चतुर्भिरध्यायैः, षोडशैः पादैः, षट्पञ्चाशदुत्तरशतेन अधिकरणैः, पञ्चचत्वारिंशदुत्तरशतैः सूत्रैः उत्तरमीमांसां प्रणीय वेदान्तार्थेन प्रतिष्ठापयामास। भगवान् बोधायणः विस्तीर्णेन वृत्तिग्रन्थेन सूत्रार्थान् विचार्य विशदीचकार। तदनन्तरं टङ्क-द्रमिडाचार्य-कुहदेव-ब्रह्मनन्दिप्रभृतीनाम् प्राचीनाचार्याणां सत्सम्प्रदायतः अपि च भगवन्नाथमुनिपुण्डरी-काक्षराममिश्रपरम्परात आरभ्य श्रीमद्यामुनमुनिमहापूर्णपर्यन्तया परम्परया च वेदान्तार्थाः संरक्षिताः संवर्धिताश्च। महापूर्णगुरुचरणसमाश्रिताः श्रीभगवद्रामानुजमुनयः श्रीमद्यामुनमुनि-सङ्कल्पविषयीभूतं शारीरकमीमांसाभाष्यं श्रीभाष्यमिति प्रपञ्चप्रख्यातं कारुण्येन जनतां समुज्जीवयामासुः।

तत्र वेदबाह्याः नाम वेदप्रामाण्यमनङ्गीकुर्वन्तः नास्तिकाः। ते च कुतर्कैकशरणाः चार्वाकजैनबौद्धपाशुपतादयः तान् समीचीनन्यायप्रयोगेन तद्युक्त्याभासान् निरस्य तत्त्वार्थं बोधयामास यतिराजः। वेदस्य युक्तिमूलप्रामाण्यम् आतिष्ठमानाः वेदस्य स्वतः प्रामाण्यम्

---

1. आचार्यशिवप्रसादसंपादितहिन्दी 'भावप्रकाशिकाभाष्योपेताच्छ्रीमद्भगवरामनुजाचार्यकृत-शारीरिकमीमंसाभाष्यनामक- श्रीभाष्यात् -पृ.सं.-01-22

अनङ्गीकुर्वन्तः साङ्ख्ययोगवैशेषिका आस्तिकाभासाः समीचीनन्यायैः पराजिताः। स्वतः प्रामाण्यवादिनोऽपि कर्मकाण्डैकव्याख्यातारः वेदान्तभागानाम् आचक्षमानाः पूर्वमीमांसका निरस्ताः। पूर्वकाण्डस्यापि भगवदाराधनकर्मप्रतिपादकताम् उपपाद्य उभयमीमांसयोरैकं शास्त्र्यम् उपपादयामास यतिराजः।

तथापि बौद्धच्छायानुसारिणः प्रपञ्चमिथ्यात्ववादिनः निर्विशेषचिन्मात्रब्रह्मपरतया श्रुतिस्मृतिपुराणब्रह्मसूत्राणां दुर्व्याख्याः विरचय्य तत्त्वार्थं सर्वमपि व्याकुलं चक्रुः। भगवान्भाष्यकारः ब्रह्मसूत्रव्याख्यानसन्दर्भे जिज्ञासाधिकरणादिभिः बहुभिः अधिकरणैः तद्वादं विमृष्य प्रमाणोपपत्तिभिः तन्मतम् निरस्तवान्। इत्थं समस्तचेतनाचेतनसृष्टिस्थिति-प्रलयादिकारणं परब्रह्मपुरुषोत्तमं तत्त्वं, वर्णाश्रमधर्मेतिकर्तव्यताकं भक्तिरूपापन्नं प्रपत्तिरूपं च वेदान्तविहितं ज्ञानमेव मोक्षसाधनं हितमनिश्शेषाविद्यानिवृत्तपूर्वकपरब्रह्मानुभवम् अपुनरावृत्तिरूपं मोक्षस्वरूपं च पुमर्थं, प्रतिपादयितुं श्रीभाष्यग्रन्थं विरचयामासेति।

**तत्त्वत्रयम्**[1] -

**ईश्वरः**- ईश्वरशब्दस्यार्थः सर्वनियामकः अर्थात् सकलजगदुदयविभवलयानां कारणं परं ब्रह्मैव सर्वविधकारणभूतः षाड्गुण्यपरिपूर्णः सकलकल्याणगुणाश्रयः सर्वज्ञः सर्वान्तर्यामी सर्वव्यापी च श्रीमन्नारायणः एव ईश्वरपदप्रतिपाद्यः। अयमेव परमात्मा जगतामुपादानकारणभूतं निमित्तकारणञ्च। परब्रह्मशब्देन च प्रतिपाद्यमान ईश्वरः आनन्दस्वरूपः रसस्वरूपश्च।

**जीवात्मा**- जीवः निर्मलः ज्ञानानन्दस्वरूपश्च। जीवात्मा नित्यः। जीवस्य स्वरूपम् अणुरूपात्मकम्। जीवोऽयं मनसा केवलं विज्ञेयः। जीवात्मैव चित्शब्देनापि व्यपदिश्यते। चित् पदार्थभूताः जीवाः नित्याः मुक्ताः बद्धाश्चेति त्रिविधा भवन्ति।

**प्रकृतिः**- जडपदार्थद्रव्यमेव प्रकृतिरिति शब्देन व्यपदिश्यते। सत्त्वरजस्तमोरूपत्रि-गुणात्मिकेयं प्रकृतिः ज्ञानरहिता विकृतिं भजन्ती वर्तते। प्रकृतिः शुद्धसत्त्वात्मिका मिश्रसत्त्वरूपा सत्त्वरूपा चेति त्रिप्रकाराः सन्ति। एवं अनेके विषयाः विचाराश्च पूर्वपक्षसिद्धान्तपुरस्सरं श्रीमद्रामानुजाचार्यैः वर्णिताः सन्ति येषु मनागिवात्र प्रस्तुताः॥

तत्र विशिष्टाद्वैतशब्दार्थः द्विधेति वक्तुं शक्यते विशिष्टस्य अद्वैतम् इत्यप्रकारप्रकरिणोः श्रीवेदान्तदेशिकाः एवं व्याचख्युः। अशेषचिदचित्प्रकारं ब्रह्मैक्यमेव तत्त्वम्। तत्र प्रकारप्रकरिणोः प्रकाराणाञ्च मिथोऽत्यन्यतभेदेऽपि विशिष्टैक्यादिविवक्षैकत्वव्यपदेशः तदितरनिषेधश्च। विशिष्टयो अद्वैतमिति वाक्यांशस्य व्युत्पत्तिः भगवद्रामानुजाचार्याः

1. श्रीमदण्णङ्गराचार्यसंपादित-श्रीमद्वरवरमुनिकृतप्रमाणसङ्ग्रहे पृ.सं. - 63-110

श्रीभाष्ये अनया रीत्या विवेचयामासुः– स्थूलसूक्ष्मप्रकारं ब्रह्मैव कारणं चेति ब्रह्मोपादानम्, अतः जगत्सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्मैव कारणमिति।

तत्र इतोऽपि स्पष्टप्रतिपत्तये **'विशिष्टाद्वैतम्'**[1] इति पदस्य विग्रहवाक्यपूर्वक-विशेषार्थः किञ्चित्सङ्क्षेपेणात्रोपस्थाप्यते यथा–

**तत्त्वं जिज्ञासमानानां हेतुभिःसर्वतोमुखैः।**
**तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः[2]॥**

इत्यादिवचनैः नारायण एव समस्तचिदचिच्छरीरको विशिष्टाद्वैतं तत्त्वम्। किमिदं विशिष्टाद्वैतं नाम? उच्यते–द्वयोः भावः द्विता। पृथक्त्वनिवेशित्वात् संख्यायाः तद्वाचिना शब्देन तस्य लक्षणा। तथा च द्विताशब्देन भेद उच्यते। द्विताया इदं द्वैतम्। भिन्नमित्यर्थः। विशिष्टपदसमभिव्याहारात् विशिष्टप्रतियोगिकत्वं भेदस्य लभ्यते। तत्सजातीयत्वं च तादृशभेदवतः तत एव लभ्यते। न विद्यते द्वैतं यस्य तत् अद्वैतम्। स्वभिन्नस्वजातीय-शून्यमित्यर्थः। विशिष्टं च तत् अद्वैतं च विशिष्टाद्वैतम्। साजात्यं च स्वसमभिव्याहृतपदार्थता-वच्छेदकरूपेण। तच्च वैशिष्ट्यमेव। तच्च चिदचित् प्रतियोगिकं, प्रकरणात्। तथा च चिदचिद्विशिष्टं स्वभिन्नस्वसजातीयवस्तुशून्यं तत्त्वमित्यर्थः।

## इति शम्

**परिशीलितग्रन्थसूची–**

1. श्रीमत्सायणमाधवाचार्यप्रणीतसर्वदर्शनसङ्ग्रहः प्रकाशकः – प्राच्यविद्यासंशोधन-मन्दिरम् मुम्बई, प्रथमावृत्तिः, 1924
2. श्रीमदुदयनाचार्यप्रणीतः न्यायकुसुमाञ्जलिः, तत्त्वप्रकाशिकोपेतः व्याख्याकारः– वसन्तत्र्यमबक शेवडे सम्पादकः– डॉ–ब्रह्मानन्दत्रिपाठी प्रकाशनम्– चौखम्भासुर-भारतीप्रकाशन् वाराणसी–1983
3. श्रीमद्भगवरामनुजाचार्यकृतम् शारीरिकमीमंसाभाष्यम्–श्रीभाष्यम् हिन्दी भाव-प्रकाशिकाभाष्योपेतम् व्याख्याकारः–आचार्य शिवप्रसादद्विवेदी प्रकाशनम्– चौखम्भा विद्याभवन, वाराणसी, प्रथम–सं–2018

---

1. वेङ्कटाध्वरिविरचितदिव्यसूरिचरितम्–पृ.सं.–79
2. महाभारते अनुशासनपर्वणि 79तमेऽध्याये 22तमःश्लोकः

4. गुरुपरम्पराप्रभावः पिल्लैलोकजीयर्स्वामिभिरनुगृहीतम् श्रीमदण्णङ्गराचार्यकृत-व्याख्यानसहितञ्च प्र.सं, काञ्चीपुरम् ग्रन्थमाला - 1975

5. श्रीमल्लोकाचार्यकृतार्थपञ्चकम् श्रीमदण्णङ्गराचार्यकृतव्याख्यानसहितम् प्रथम-सं, चेन्नै PNK Press 1946

6. श्रीमद्वरवरमुनिकृतप्रमाणसङ्ग्रहः श्रीमदण्णङ्गराचार्यसंपादितो मुद्रितश्च प्रथम-संस्करणम्-1975 काञ्चीपुरम्, ग्रन्थमाला 1675



# विशिष्टाद्वैतवेदान्तानुसारेण प्रमेयविचारः

**केशवलुईटेलः** *

श्रुतिः अखिलचेतनाचेतनविशिष्टं ब्रह्म बोधयति। ब्रह्ममीमांसायामपि 'अथातो ब्रह्मजिज्ञासा' इति सूत्रभाष्यावसरे भाष्यकारैरभिहितम्। महाभारतमोक्षपर्वणि तस्मिन्नेन विषये आलोचितमस्ति। उक्तञ्च-

**तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः।**
**तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः॥**

सर्वतोमुखहेतुना तत्त्वविदामयमेव निर्णयः यत् महायोगी प्रभुः श्रीहरिनारायण एव एकं तत्त्वमिति सिद्धान्तः। तत्त्वं नाम अबाधितवस्तु। यत्तत्त्वस्य अज्ञानेन बन्धनं ज्ञानेन मोक्षः जायते, सः पदार्थः ज्ञेयः, प्रमेय च कथ्यते। उक्तञ्च वेदान्तदेशिकैः न्यायपरिशुद्धौ- **'यद्अज्ञानात् संसारः, यज्ज्ञानात् तन्निवृत्तिः तत्प्रमेयमिति'**।[1] समस्तचेतनाचेतनविशिष्टं ब्रह्मैव तत्त्वमिति भावः। तदेव चिदचिद्विशिष्टं ब्रह्म एव एकतत्त्वं वा प्रमेयमित्युच्यते। अत्र प्रमेयशब्दः तत्त्वस्य पर्यायः। प्रमायाः विषयः सविशेषमेकमद्वैतं तत्त्वं ब्रह्मैव इति विशिष्टाद्वैतस्य अभिप्रायः। तच्च तत्त्वं परब्रह्म सदा समस्तचेतनाचेतनविशिष्टं वर्तते। सर्वे चेतनाचेतनपदार्थास्तस्य विशेषणानि। तच्च एषां विशेष्यम्। अपृथक्सिद्धिः तयोः संसर्गः। चिदचितोः तस्य विशेषणेन शरीररूपेण सर्वकालसर्वावस्थासु सत्वात् अविनाभाव-सम्बन्धेन अपृथक्सिद्धसम्बन्धेन वा विशिष्टैकरूपेण सत्वात् तत्त्वत्रयमिति प्रसिद्धम्।

तत्र विशेषणविशेष्ययोर्मध्ये परस्परेण आत्यन्तिकभेदे सत्यपि विशिष्टवस्तुनः ऐक्यं तथा प्राधान्यमिति विवक्षया शास्त्रेषु एकत्वव्यवहारः क्रियते, ब्रह्मेतरस्य निषेधः क्रियते। वेदान्तदेशिकैरपि अभिहितम्- **'अशेषचिदचित्प्रकारं ब्रह्मैव तत्त्वम्। तत्र प्रकारप्रकारिणोः प्रकाराणाञ्च मिथोऽत्यन्तभेदेऽपि विशिष्टयैकादि विवक्षयैकत्व-**

---

* सह-अध्यापकः, संस्कृतविभागः
गुरुचरणमहाविद्यालयः, सिलचर, असम

1. न्यायपरिशुद्धिः 1.1

**व्यपदेशः। तदितरनिषेधश्च**'[1]। अन्यथा सर्वेषु प्रमाणेषु विरोधः स्यात्। अद्वैतसम्मत-एकतत्त्ववादे निर्विशेषब्रह्ममात्रं सत्यमस्ति, तस्य जीवभावसंसारः जडप्रपञ्च सर्वं मिथ्या अस्ति। विशिष्टाद्वैतसम्मत-एकतत्त्ववादे तु ब्रह्म निर्विशेषं न, सम्पूर्णचेतनाचेतनविशेषणैः विशिष्टमस्ति। अतः चेतनाचेतनरूपविशेषणैः युक्तम् इदं ब्रह्म यथार्थज्ञानस्य विषयत्वात् तथा सम्यक्प्रकारेण ज्ञातव्यत्वात् प्रमेयम् इत्युच्यते।

विशिष्टाद्वैतिनस्तु चिदचिदात्मकस्य प्रपञ्चस्य ब्रह्मशब्दाभिधेयस्य पुरुषोत्तमस्य च सत्यत्वम्, तयोः ऐक्यव्यदेशयोग्यः शरीर-शरीरिभावसम्बन्धेन विशिष्टमेकतत्त्वमित्याहुः। अत्र श्रुतिसूत्रादिसम्मत एव शरीर-शरीरिभावलक्षणसम्बन्धः। 'प्रधानेन व्यपदेशाः भवन्ति' इति न्यायेन एतादृशसम्बन्धबोधकेन विशिष्टाद्वैतशब्देन व्यपदेश उपपद्यते। ईश्वरस्य स्वरूपेण तादात्म्यवर्णने स्यादयं भेदविरोधः। आत्मशरीरभावेन तु तादात्म्यप्रतिपादने न कोऽपि दोषः प्रसृजति। प्रमेयशब्दस्य विषये व्याकरणे पक्षद्वयं वर्तते। अत्र प्रस्तूयते-

1. 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन' अर्थात् धातोः पूर्वम् उपसर्गेण सह युक्तो भवति पश्चाद् कारकेण। अस्य मतानुसारेण प्रकृष्टं ज्ञानं प्रमेयं भवति। यथार्थज्ञानं प्रमा, यस्य यः विषयः भवति तत् प्रमेयम्। इत्थं यथार्थज्ञानविषयः प्रमेयं। इदं प्रमेयत्वं सर्वपदार्थ-साधारण-सामान्यधर्मः। अयमेकपक्षः।

2. द्वितीयपक्षः- 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' अर्थात् पूर्वं धातुः कारकेण युक्तो भवति पश्चाद् उपसर्गेण युक्तो भवति। अस्यानुसारेण मितिः अर्थात् ज्ञानस्य विषयः प्रकर्षेण मेयं प्रमेयम्। सम्यक् प्रकारेण ज्ञातुं योग्यविषयः। इदं प्रमेयत्वं विशेषधर्मः। किञ्च सर्वेऽपि पदार्थाः सम्यक् ज्ञातुं योग्याः न भवन्ति। द्विप्रकारकं प्रमेयत्वमेव उक्तब्रह्मणि संगच्छते। वेदान्तदेशिकाचार्यैः न्यायपरिशुद्धौ प्रतिपादितमस्ति यत्- **'अत्र यद्यपि प्रमाविषयः प्रमेयमिति व्युत्पत्या आरोपिताकारव्यवच्छेदार्थतया अनारोपितरूपं सर्वं प्रमेयम्, तथापि निःश्रेयसान्तरङ्गतया तदर्थिभिः प्रकर्षेण मेयं प्रमेयमिह विवक्षतम्। यद्विषयेण भ्रमेण संसरामः, यद्विषयेण च तत्त्वज्ञानेनापवृज्येमहि, तदिह नः प्रकर्षणं मेयं प्रमेयम्'**[2] इति।

लोके सर्वेऽपि पदार्थाः न सम्यक् ज्ञातुं योग्याः। अनया रीत्या विशेषरूपेण ज्ञातुं योग्यविषय एव प्रमेयकोटौ गण्यते, न तु साधारणरूपेण। साधारणरूपेण आरोपितस्य वस्तुनः ज्ञानं प्रकृष्टं ज्ञानं भवितुं नार्हति। यस्य पदार्थस्य तात्त्विकरूपेण प्रतीतिर्भवति स एव प्रमातुं योग्यः। यद्यपि उभावपि प्रमेयत्वेनैव प्रतीयेते। परन्तु मोक्षेण सह यस्य

1. न्यायसिद्धाञ्जनम्-प्रतिज्ञावाक्यम्
2. न्यायपरिशुद्धिः 1.1

साक्षात्सम्बन्धः स एव अत्र ग्रहणीयः। वस्तुतः यस्य विषयस्य भ्रमज्ञानेन संसारे प्रवृत्तिः यस्य तत्त्वज्ञानात् संसारात् निवृत्तिः। स एव सम्यक् ज्ञातुं योग्यः विषयः। तदेव प्रमेयम्।

**द्रव्यविभागः**

जगतः समस्तपदार्थजातं प्रमाणप्रमेयभेदेन द्विधा विभज्यते। प्रमाणानि त्रीणि। प्रमेयं द्विविधम् द्रव्याद्रव्यभेदात्। उक्तञ्च वेदान्तदेशिकैः-

**द्रव्याद्रव्यप्रभेदान् मितमुभयविधं तद्विदस्तत्त्वमाहुः**
**द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ।**
**अन्त्यं प्रत्यक् पराक् च प्रथममुभयधा तत्र जीवेशभेदात्**
**नित्याभूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः[1]।**

**द्रव्याद्रव्यविभागे बौद्धवैशेषिकयोः मतपरिष्कारः**

वैशेषिकाणां मते पदार्थाः सप्त-द्रव्य-गुण-कर्म-विशेष-समवाय-अभावाश्चेति। विशिष्टाद्वैतसम्मत-पदार्थविभाजने वैशेषिकाणां काचित् शङ्का। पदार्थानां द्रव्यम् अद्रव्यम् इति विभागद्वयं कथमुपपन्नं भवति। इति चेत् उच्यते- वैशेषिकमते कर्माणि पञ्च-उत्क्षेपण-अपक्षेपण-आकुञ्चन-प्रसारण-गमनानि च। पञ्चभेदान् अकृत्वा चलनात्मकं कर्म इति लक्षणमादाय कर्माणि एव चतुर्णां अन्तर्भावे सति गौरवप्रसङ्गः न भवति। यत्र क्रिया भवति तत्र पूर्वदेशविश्लेषस्य एवं उत्तदेशसंयोगस्य नैरन्तर्येण उपलब्धिः भवत्येव। अतः संयोगादतिरिक्तं कर्म पदार्थत्वेन स्वीकरणं नोचितम् इति विशिष्टाद्वैतिनाम् आशयः।

वैशेषिकैः जातिनामकः पदार्थः सामान्यशब्देन-अभिहितः। किन्तु जातिः प्रत्यक्षविषयीभूता वस्तुनः संस्थानरूपा। जातेः इयमपि गौः गोत्वावच्छिन्नत्वात् इत्यादिरूपेण द्वितीय-तृतीयादि-प्रत्यक्षैः परामर्शः भवति। संस्थानविशेषभिन्नः गोत्वादिजातिनामकः पदार्थः नान्यः, यस्य प्रत्यक्षकाले साक्षात्कारः तथा द्वितीय-तृतीय-प्रत्यक्षैः परामर्शः भवेत्। अतः असाधारणाकार एव जातिः इति विशिष्टाद्वैतिनः वदन्ति।

पुनश्च वैशेषिकाः अयुतसिद्धवस्तुषु गुण-गुणी-जाति-व्यक्त्यादिषु या विशिष्ट-प्रतीतिर्भवति तत्र समवायनामकं सम्बन्धं मन्वते। एतत् न उपपद्यते। किञ्च जातिव्यक्यादिषु विशिष्टप्रतीतेः निर्वाहकः समवायसम्बन्धः, तस्यापि निर्वाहकः अपरः स्यादिति गौरवात् अनन्तापेक्षकत्वरूपदोषस्य शङ्का। समवायस्तु इन्द्रिय-सन्निकृष्टवस्तुनः विशेषणरूपेणैव

1. तत्त्वमुक्ताकलापः-जडद्रव्यसरः 9

सिद्ध्यति, विशेषनामकः पदार्थस्तु जीवेश्वरयोः अणुत्व-विभुत्वादीनां विभाजकधर्ममात्रम्। अतः विशिष्टाद्वैतिनः कर्म-सामान्य-विशेष-समवायानां पृथक्तया पदार्थत्वेन न अङ्गीकुर्वन्ति।

वैशेषिकाणां अभावनामकः पदार्थः सप्तमपदार्थः भावान्तररूपमेव। यथा- घटस्य प्रागभावः घटस्य पिण्डत्वावस्था। प्रध्वंसाभावः कपालत्वावस्था एवं चूर्णत्वावस्था। अत्यन्ताभाव-अन्योन्याभावौ तु स्पष्टतया भावान्तररूपमेव। अभावस्य भावान्तररूपस्वीकारे तथा प्रत्यक्षे अन्तर्भावकरणे अभावपदार्थस्य अतिरिक्ततया ग्रहणं न आवश्यकमिति।

द्रव्याणि स्थिराणि इति विशिष्टाद्वैतिनः। बौद्धास्तु क्षणभङ्गवादं प्रतिष्ठापयन्तः द्रव्यस्य स्थिरत्वं न स्वीकुर्वन्ति, सर्वं क्षणिकत्वात्। पदार्थ एकस्मिन् क्षणे स्थित्वा द्वितीये क्षणे एव नश्यति। अतः बौद्धाः प्रत्यक्षप्रमाणेन अनुमानप्रमाणेन वा क्षणिकत्वं साधयन्ति इति विशिष्टाद्वैतिनां शङ्का। प्रथमपक्षः न समीचीनः, किञ्च प्रत्यक्षप्रमाणेन क्षणिकत्वं न सिध्यति, स्थिरत्वमेव साध्यते। 'सोऽयं घटः' इति प्रत्यभिज्ञा प्रत्यक्षप्रमाणेनैव लोके व्यवह्रियते। अनुमानप्रमाणेनापि क्षणिकत्वं नोपपद्यते, स्मरणसामान्यस्य अनुपपन्नत्वात् व्याप्तिस्मरणासम्भवः। व्याप्तिं विना अनुमानं निर्मूलं भवति। क्षणभङ्गवादे क्षणिकत्वसाधकानुमानस्य सामञ्जस्यविरहात्।

पुनः बौद्धानामभिप्रायः यत्- प्रमाणैः क्षणिकत्वसाधनासम्भवेऽपि लोके आसक्ति-निवारणार्थं क्षणिकत्वस्य उपदेशः आवश्यक इति चेत् न। प्रमाणं विना क्षणिकत्वस्य उपदेशे अधर्मप्राप्तिरेव स्यात् सूक्ष्मबुद्धिसंपन्नानां लोके क्षणिकत्ववादे आस्था कुतः। उक्तविवेचनेन द्रव्याणि स्थिराणि एव इति विशिष्टाद्वैतिनः उररीकुर्वन्ति।

**द्रव्यस्वरूपम्**

अवस्थाश्रयम् उपादानम्[1]। उपादानत्वं द्रव्यलक्षणम्। यत् उपादानं तत् द्रव्यमिति[2] कथ्यते। यः पदार्थः अवस्थाश्रयो भवति तद् उपादानमिति कथ्यते। आगन्तुकोऽपृथक्सिद्ध-धर्मोऽवस्था[3]। अपृथक्सिद्धः आगन्तुको धर्मः अवस्था इत्युच्यते। यस्मिन् पदार्थे अवस्था न भवति स अद्रव्यपदार्थः। द्रव्यभिन्नत्वात् तद् अद्रव्यमिति उच्यते।

द्रव्यलक्षणं तत्त्वमुक्ताकलापग्रन्थे वेदान्तदेशिकैरित्थमभिधीयते-

**तत्र द्रव्यं दशावत् प्रकृतिरिह गुणैस्सत्त्वपूर्वैरुपैता**
**कालोऽब्दाद्याकृतिस्स्यादणुरवगतिमान् जीव ईशोऽन्य आत्मा।**

1. न्यायसिद्धान्जनम्-जडद्रव्यपरिच्छेदः
2. न्यायसिद्धान्जनम्-जडद्रव्यपरिच्छेदः
3. श्रौतप्रमेयचन्द्रिका

**संप्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव**
**ज्ञातुर्ज्ञेयावभासो मतिरीति कथितं संग्रहाद् द्रव्यलक्ष्म**[1]॥

संयोगरहितपदार्थः अद्रव्यमिति उच्यते। यस्मिन् कस्यापि पदार्थस्य संयोगः न भवति अथवा यत् केनापि पदार्थेन सह संयुक्तं न भवति तत् अद्रव्यमिति कथ्यते। द्रव्यस्यैव परस्परं संयोगः भवति अद्रव्यस्य संयोगः न संभवति। अद्रव्यं द्रव्ये आश्रितेऽपि द्रव्यात् सर्वथा भिन्नं भवति उक्तं च तत्त्वमुक्ताकलापे- **अद्रव्यं द्रव्याद् अत्यन्तभिन्नम्**[2] इति।

द्रव्यमपि द्विविधं जडाजडभेदात्। जडञ्च द्विविधं प्रकृतिः कालश्च। प्रकृतिः चतुर्विंशतितत्त्वात्मिका। कालश्च परमार्थतः स्वयं निर्विशेषः अनादिरनन्तश्च। किन्तूपाधि-भेदाद् भूत-भविष्यद्वर्तमानभेदात्त्रिधा भवति। तस्य अपरे अपि भेदाः सूक्ष्मपरिमाणपरमाणुतः परार्धसंख्यापर्यन्ता भवन्ति। अजडञ्च द्विविधं पराक् प्रत्यक् च। परागपि द्विधा- नित्यभूतिर्धर्मभूतज्ञानञ्च। प्रत्यगपि द्विविधो जीवेश्वरभेदात्।

**अद्रव्यस्वरूपम्**

पृथिव्यादिद्रव्येषु व्यवस्थितरीत्या यथा अपृथक्सिद्धः सम्बन्धः प्रत्यक्षसिद्धः तद्वत् अद्रव्यवर्गोऽपि प्रत्यक्षसिद्धः एव। उक्तञ्च तत्त्वमुक्ताकलापे-

**तत्तद् द्रव्येषु दृष्टं नियतिमदपृथक्सिद्धमद्रव्यजातं**
**तद्वद् विश्वं परस्य व्यवधिनियमान्न स्वरूपेऽस्य दोषः।**
**इत्थं निर्धार्य भाव्ये भगवति विविधोदाहृतिव्यक्तिसिद्धयै**
**निर्बाधान् द्रव्यधर्मान् निरनुगतिगलद्दुर्नयान् निर्णयामः॥**[3]

चिदचिदात्मकमिदं जगत् परमात्मनः अपृथक् सिद्धविशेषणेन विशेषणगतानां विकाराः जगद्गताः विकाराः वा विशेष्ये परमात्मनि संक्रमेरन् इति शङ्कायामुच्यते। परमात्मनो विकाराणां मध्ये व्यवधायकतया चेतनाचेतनयोः नियततया मर्यादारूपेण वर्तमानत्वात् परमात्मनि विकारादयो न भवन्ति इति। यथा बाल्ययुवत्ववृद्धत्वादयो विशेषणभूतस्य शरीरस्य धर्माः शरीरिणं चेतनं न विकारयन्ति।

अद्रव्यपदं भावरूपं द्रव्याश्रितं द्रव्यादन्यः पदार्थः इति वेदान्तशिकाचार्यैः द्रव्यवर्णनावसरे तत्त्वमुक्ताकलापे जडद्रव्यसरे **'द्रव्याद्रव्यप्रभेदान्'** इत्यस्मिन् श्लोके

---

1. तत्त्वमुक्ताकलापः-जडद्रव्यसरः 10
2. तत्त्वमुक्ताकलापः-अद्रव्यसरः 2
3. तत्त्वमुक्ताकलापः-अद्रव्यसरः 2

प्रत्यपादि। द्रव्याश्रितं गुणपदवाच्यमेव अद्रव्यमित्युच्यते। किञ्च गुणक्रियाजातीनामपि द्रव्यैकाश्रयत्वेन तेषामपि अद्रव्यसंज्ञाः भवन्ति इत्यभिप्रायः।

श्रीनिवासाचार्यैः यतीद्रमतदीपिकायां अद्रव्यलक्षणम् इत्थं प्रदीयते- **संयोगरहितम-द्रव्यम्**[1] इति। अपि च वेदान्तदेशिकाचार्यैः न्यायसिद्धाञ्जने अद्रव्यलक्षणं निरूपितम् यत्- **तदद्रव्यं च सत्त्वरजस्तमांसि शव्दस्पर्शरुपरसगन्धास्संयोगशक्तिरीति दशप्रकारमेव**[2] इति।

संयोगरहितपदार्थः अद्रव्यमिति उच्यते। यस्मिन् कस्यापि पदार्थस्य संयोगः न भवति अथवा यत् केनापि पदार्थेन सह संयुक्तं न भवति तत् अद्रव्यमिति कथ्यते। द्रव्यस्यैव परस्परं संयोगः भवति; अद्रव्यस्य संयोगः न संभवति। अद्रव्यं द्रव्ये आश्रितेऽपि द्रव्याद् सर्वथा भिन्नं भवति उक्तं च तत्त्वमुक्ताकलापे-**अद्रव्यं द्रव्यादत्यन्तभिन्नं त्विदमनुपधिकं तद् विशिष्यात् स्वभावात्**[3] इति।

संयोगरहित पदार्थः अद्रव्यमित्युच्यते। यः पदार्थः केनापि अन्यपदार्थेन सह संयुक्तो न भवति तथा यत्र अपरपदार्थस्य संयोगः न भवति सः अद्रव्यपदार्थः। अद्रव्यं द्रव्याश्रितम्, न तु द्रव्यमद्रव्याश्रितम्। परन्तु एकेनैव प्रत्यक्षेण द्वयोरपि निश्चयं भवति। यथा- यदा चक्षुषा नीलं घटं पश्यति, तदाश्रितं नीलरूपमपि सहैव पश्यति, उभयोरपि चक्षुषा युगपदेव ग्रहणं भवति। आधारभूतं वस्तु द्रव्यशब्देन व्यवह्रियते। आधेयं च अद्रव्यशब्देन गुणपदेन वा व्यवह्रियते। आधाराधेयभावस्तु परस्परसापेक्ष एव।

असंख्यानि अद्रव्याणि। प्रलयकाले प्रतिक्षणं सदृशाः परिणामावस्थाः उत्पद्यन्ते, तथैव सृष्टिकालेऽपि त्रिगुणे विसदृशाः अवस्थाः परिणामादयो भवन्ति। तथैव कालेऽपि क्षणत्वलवत्वनिमेषत्वादिभिः परार्धपर्यन्तं प्रतिक्षणं अवस्थाः भवन्ति। बुद्धावपि प्रत्यक्षत्व- अनुमितित्व- शब्दत्वादयो अवस्थाः भवन्ति। एताः सर्वाः अवस्थाः अद्रव्यरूपाः।

अनेन प्रकारेण भेदानां अद्रव्याणि अनन्तरूपाणि। परस्परभेदा अपि अनन्ता एव। सर्वेषां निरूपणमसम्भवम्। अत एव सर्वेषाम् अद्रव्याणां परिगणनं कर्त्तुम् अशक्यत्वात्, लोकव्यवहारदृष्टाद् उपयोगाभावात् अन्यानि स्फुट-परिगणनीयानि अद्रव्याणि एव निरूप्यन्ते इति न्यायसिद्धाञ्जने अद्रव्यपरिच्छेदे वेदान्तदेशिकाचार्यैः निरूपितम्।

---

1. यतीन्द्रमतदीपिका- दशमोऽवतारः
2. न्यायसिद्धाञ्जनम्-जडद्रव्यपरिच्छेदः
3. तत्त्वमुक्ताकलापः-अद्रव्यसरः 2

अद्रव्याणि दश। यतीन्द्रमतदीपिकायां श्रीनिवासाचार्यैः उल्लिखितम् यत्- **तदद्रव्यं च सत्त्वरजस्तमांसि शव्दस्पर्शरुपरसगन्धास्संयोग शक्तिरीति दशप्रकार मेव**[1] इति। सत्त्व-रज-तमः-शब्द-स्पर्श-रुप-रस-गन्ध-संयोग शक्तयो चेति।

**निष्कर्षः**

गभीरं वेदमहोदधिम् अवगाह्य न कोऽपि प्रवीणः समस्तानां प्रमेयपदार्थानां इदमित्थं गणयितुं शक्नोति। यद्यपि अस्य कार्यस्य पूर्णतया सिद्धिः असम्भवा। तथापि समुद्रे नैकानि रत्नानि सन्ति, येषां साकल्येन प्राप्तिः न सम्भवम्। यदि एकस्यापि रत्नस्य प्राप्तिर्जायते तर्हि रत्नपरीक्षकः तद् न त्यजति अपि तु तमादाय तस्य महान् सन्तोषः जायते। एकेनैव रत्नेनापि हारस्य शोभां वर्धयति। तद्वद् अनन्तकल्याणगुणगणालयस्य परमात्मनोऽपि पूर्णतया वर्णनम् अशक्यम्, परन्तु एकैकोऽपि गुणः सर्वथा ग्राह्यः भवति। अत उच्यते-

**गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयम्**
**दिङ्मात्रं दर्शयन्नप्यहमिहनिपुणैः प्राध्वमध्यक्षणीयः।**
**माभून्निःशेषसिद्धिस्तदपि गुणविदः स्फीति निःसीमरत्ने**
**मध्येहारं निधेयं महति जहति किं मौक्तिकं लब्धमब्धौ**[2]**॥**

अत्यन्तं सूक्ष्मम् इन्द्रियातीतम् अलौकिकं ब्रह्म वस्तु केवलं वेदादेव ज्ञातुं शक्यते। रामानुजाचार्येण ब्रह्मसूत्रस्य शास्त्रयोनित्वाधिकरणे उल्लिखितमस्ति यत्- **'अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् 'यतो वा इमानि भूतानि' इति वाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम्'**[3] इति। चराचरजगतः सर्वेऽपि पदार्थाः द्रव्यम् अद्रव्यम् इति भेदेन परमप्रमेयभूते विशिष्टे ब्रह्मणि एव अन्तर्गताः भवन्ति। तेषु केचन द्रव्यभूताः केचन अद्रव्यभूताः। न केऽपि पदार्थाः द्रव्याद्रव्याभ्यां भिन्नाः भवन्ति। द्रव्याद्रव्यभिन्नः तृतीयपदार्थः असम्भवः। अतः सर्वेऽपि पदार्थाः द्रव्याद्रव्ययोः अन्तर्भूताः। अयं विभागः प्रत्यक्षादिप्रमाणैः सिद्ध इति विशिष्टाद्वैतिनामाशयः।

---

1. यतीन्द्रमतदीपिका- दशमोऽवतारः
2. अधिकरणसारावली
3. ब्रह्मसूत्रश्रीभाष्यम्-1

**संदर्भग्रन्थसूची**

1. वरदाचार्यः के. एस.(2004) *तत्त्वमुक्ताकलापः,* सर्वङ्कषाव्याख्यासहितः, आर्षग्रन्थप्रकाशनम्, मैसूर, जयानगरम्, कर्णाटकम्।
2. श्रीनीलमेघाचार्यः पण्डितः (1996) *न्यायसिद्धाञ्जनम्,* सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयः वाराणसी(उ.प्र.)।
3. राघवाचार्युलु टि. वि (1989) *वेदार्थसंग्रहस्य समीक्षात्मकमध्ययनम्,* राष्ट्रियसंस्कृतसंस्थानम्, तिरुपतिः (आ. प्र.)।
4. द्विवेदी-आचार्यशिवप्रसादः (1983) *तत्त्वमुक्ताकलापः,* सर्वार्थसिद्धिः, तत्त्वमुक्ता-कलापसंघः, अयोध्या, फैजावाद, (उ.प्र.)।
5. द्विवेदी आचार्यशिवप्रसादः(1989) *यतीन्द्रमतदीपिका,* चौखंबासुरभारतीप्रकाशन, वाराणसी (उ.प्र.)।
6. त्रिभुवनदासस्वामी (2013) *विशिष्टाद्वैत वेदान्त का विस्तृत विवेचन,* चौखंबा-संस्कृतप्रतिष्ठानम्, जवाहरनगरम्, दिल्ली।
7. द्विवेदी पं. शिवदत्तः (2008) *बृहद् संस्कृतनिबन्धकलिका,* भारतीय विद्या प्रकाशन, वाराणसी, (उ.प्र.)।
8. मिश्र रामसजीवन प. (1980) *विशिष्टाद्वैत दर्शन में तुलनात्मक मुक्ति विमर्शः,* श्रीरङ्गनाथप्रेस, श्रीधाम वृन्दावन, (उ.प्र.)।
9. चक्रवर्ती पी. एम्. (1990) *ब्रह्मसूत्रविमर्शः,* अहोविलमठः, मद्रास (तमिल.)।
10. लक्ष्मी ताताचार्यः एम. ए. (1983) *विशिष्टाद्वैतकोशः,* (1 सम्पुटः), संस्कृतसंशोधन संसद्, यादवाद्रिः, मेलुकोटे, कर्णाटकम्।
11. वरदाचार्यः एस.एम.एस. (1987) *विशिष्टाद्वैतकोशः,* (2 सम्पुटः), संस्कृतसंशोधन संसद्, यादवाद्रिः, मेलुकोटे, कर्णाटकम्।
12. राजन एम.ए.एस. (1987 ) ब्रह्मसूत्रश्रीभाष्यम्, संस्कृतसंशोधन संसद्, यादवाद्रिः, मेलुकोटे, कर्णाटकम्।
13. उपाध्यायबलदेवः (1997) *भारतीयदर्शन,* शारदामन्दिरम्, वाराणसी (उ.प्र.)।



श्रीवैष्णवी, वर्ष-2022, अंक-3 ISSN : 7552-2779

# शब्दशास्त्रीयो धातुविमर्शः

डॉ० गोविन्दनाथचौधरी*

**"सर्वाणि नामानि आख्यातजानि इति शाकटायनो नैरुक्तसमयश्च"**[1] इत्यभियुक्तवचनेन सर्वे शब्दाः धातुजाः सन्तीति मन्यन्ते। शब्दमात्रं धातुप्रत्ययाभ्यां योगेन निष्पद्यते इति सिद्धान्तमनुसृत्य महाभाष्यकारेण-**"उणादयो व्युत्पन्नानि प्रातिपदिकानि"** इति मतं समुपस्थापितम्। यथाहि-[2] **"नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्"** इति।

कोशानुसारं धातुरिति शब्दः विभिन्नेषु अर्थेषु यौगिकः किंवा रूढो विद्यते, किन्तु शब्दशास्त्रीयदृष्ट्या धातुरिति शब्दस्य प्रथमा चर्चा आथर्वणश्रुतौ प्राप्यते। तद्यथा-**"को धातुः? किं प्रातिपदिकम्?"**[3] इत्यादयः।

धातुशब्दोऽयं धारणार्थक **'धा'** धातोः **"सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्"**[4] इति सूत्रेण औणादिके **'तुनि'** प्रत्यये कृते सति निष्पद्यते। यस्य व्युत्पत्तिरित्थं भवति- **"दधाति धारयति क्रियारूपमर्थं, भ्वादिगणपाठमर्यादाञ्च इति धातुः"** अथवा **"दधाति= (सर्वं च नाम धातुजमाह इति सिद्धान्ताद् निष्पादनद्वारा) प्रातिपदिकानि पुष्णाति इति धातुः।"**[5]

यद्यपि उक्तरीत्या धातुरिति शब्दस्य निर्वचनं सम्भवं विद्यते तथापि शब्दशास्त्रे संकेतितार्थेषु संज्ञाकरणस्य **"स्वं रूपं शब्दस्याशब्दसंज्ञा"**[6] इति सूत्रनिर्देशत्वादयं पारिभाषिकः शब्द एव मन्यते। यथा- शब्दशास्त्रे नदी, वृद्धिः, गुणादयः संज्ञाः न

---

* अतिथिप्राध्यापकः (व्याकरणम्) राजकीयसंस्कृतमहाविद्यालयः, भागलपुरम्, (का.सिं.द.सं.वि.वि., दरभंगा)

1. निरुक्तम्- 1.2
2. पाणिनिसूत्रम्- 8.2.59 एवं तदुपरि महाभाष्यम्-7.1.2
3. गोपथब्राह्मणम्- 1.24
4. उणादिसूत्रम्- 1.69
5. माधवीयाधातुवृत्तिः, भूमिका, पृष्ठ-1, सम्पादकः-द्वारकादत्त दासः, प्रकाशन-प्रा. भा.प्र. वाराणसी-1964 ई.।
6. पाणिनिसूत्रम्- 1.1.68

लौकिकार्थबोधकाः अपितु शब्दशास्त्रीयदिशानिर्दिष्टार्थबोधकाः भवन्ति। एवं हि धातोर्लक्षणमाचार्याणां सम्मतौ इत्थं विद्यते– **"क्रियावाचकत्वे सति भ्वादिगणपठितत्वे सति पाणिनीय-संकेतसम्बन्धेन धातुपदवत्त्वमेव धातुत्त्वम्।"**

आचार्यपाणिनिना धातुसंज्ञाविधानाय द्वयोः सूत्रयोः प्रवचनं कृतम्– **(1) "भूवादयो धातवः"**[1] एवं **(2) "सनाद्यन्ता धातवः"**[2] चेति। तत्र प्रथमेन सूत्रेण क्रियावाचित्वाद् धातुपाठे पठितानां धातुसंज्ञा भवति तथा द्वितीयेन च सूत्रेण सनादिद्वादशप्रत्ययानां योगः सत्त्वादपि तत्तत् प्रत्ययान्तानां धातुसंज्ञा भवति। एवं प्रकारेण हि धातोः द्विधा वर्गीकरणं कर्तुं शक्यते– मूलधातुः, प्रत्ययान्तः कृत्रिमो वा धातुः।

तत्र विभिन्नैः आचार्यैः प्रथमसूत्रस्य व्याख्या बहुव्यापकरीत्या कृतास्ति। महाभाष्यकारेण आचार्येण पतञ्जलिना **"क्रियावचनो धातुः"** तथा **"भाववचनो धातुः"**[3] इत्याभ्याम् उभयप्रकाराभ्यां व्याख्याभ्यामेषः परिपुष्टतः। आरम्भे तावदेतेन इमे द्वे व्याख्ये सम्भावनामात्रं मत्वा प्रसारितं परञ्चानन्तरं सः उभयविधमेव स्वीकरोति। एवं प्रकारेण यास्कस्य **"भावप्रधानमाख्यातम्"**[4] इति वचनेन आख्यातं पाणिनेश्च धातुः एकस्मिन्नेव अर्थे प्रयुक्तो जातः, परञ्चाग्रे पतञ्जलिना धातुनिश्चयस्य यः प्रकारः स्वीकृतः, तेन ज्ञायते यत् मूलधातुः तत्प्रत्ययश्च क्रियारूपकृदन्तरूपौ च व्यावहारिकौ स्तः, यतो हि धातुरूपम् अनुमानाश्रितमात्रमस्ति।

निरुक्तकारस्य पतञ्जलेश्च दृष्ट्यां क्रियां भाववचनं कथयितुं शक्यते न वा? तत्र भावशब्दस्य व्याख्या पतञ्जलिनेत्थं कृता– (क) **'भवतेः स्वपदार्थो भवनं भावः'**, (ख) **'भवतीति भावः'**, (ग) **'भाव्यते यः स भावः'**[5] अर्थात् **भवनं, भाव्यमानं**, कालान्तरे **साध्यम्**–इमे त्रयोऽर्थाः भावस्य सन्ति। पतञ्जलिना इमानि त्रीण्येव लक्षणानि क्रियाघटितानि मन्यते। सम्भवतः अस्मिन्नेवार्थे भावप्रधानतां मनसि निधाय कात्यायनेन **"अस्तिभवतिविद्यतीनां च धातुत्वम्"**[6] इति रूपे धातुस्वरूपस्य परिज्ञानं कारयितुमिच्छति।

---

1. पाणिनिसूत्रम्–1.3.1
2. पाणिनिसूत्रम्–3.1.32
3. महाभाष्यम्– 1.3.1
4. निरुक्तम्– 1.1
5. महाभाष्यम्– 1.3.1
6. महाभाष्यम्– 1.3.1 इत्यत्र पठितं वार्त्तिकम्।

एवं प्रकारेण एतेन वार्त्तिकेन स्पष्टो भवति यत् भावस्यार्थः क्रियायाः साध्यमानस्य, जायमानस्य सत्तामात्रस्य वा अस्तित्वेनैव नास्ति अपितु व्यापकतरेष्वर्थेषु सः सत्तां, भावं विद्यमानताञ्च-तिस्रः स्वस्मिन् अन्तर्निहितं करोति। एतदेव शब्दकौस्तुभे भूषणे च **"कृञोऽर्थः यत्न इष्यते"** प्रभृतिरूपे कथितमस्ति। तद्यथा-

**व्यापारो भावना सैवोत्पादना सैव च क्रिया।**
**कृञोऽकर्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते॥**[1]

भावशब्दोऽयं न केवलं **'भू'** प्रभृतिनां धातूनां मूलार्थं यावदेव सीमितमस्ति। कस्याः अपि क्रियायाः सत्तायाः विविधाः स्थितयः एव भावः कथ्यते (यः षट्सु रूपेषु व्यक्तीकृतः-**"जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, विनश्यतीति षड्भावविकाराः"**।[2] इमानि विविधानि चरणान्येव भावः कथ्यते। एतस्य निष्पादने कालस्य व्यवधानमायाति। तद्यथोक्तं पतञ्जलिना-**"अथवा नान्तरेण क्रियां भूतभविष्यद्वर्त्तमानाः कालाः व्यज्यन्ते। अस्त्यादिभिश्चापि भूतभविष्यद्वर्तमानाः कालाः व्यज्यन्ते"**।[3]

आचार्यस्य पतञ्जलेरिमाः भावस्य परिभाषाः यमर्थं प्रति इंगितं करोति, तं नितान्तं तद्रूपे एव भावः न कथयितुं शक्यते, यस्मिन् रूपे षण्णां भावविकाराणां परिगणनं कृतम्। भावे क्रियायां चान्तरः भर्तृहरिणा एवं प्रकारेणोक्तम्-कालेन सह सीमितवत् प्रतीयमानं रूपम् **'अस्ति'** द्वारा क्रियारूपे ज्ञायते परं तदेव रूपं परितः कालहीनवत् प्रतीतः सन् भावः कथ्यते। तद्यथा-

**कालानुपाति यद् रूपं तदस्तीति प्रतीयते।**
**परितस्तु परिच्छिन्नं भाव इत्येव कथ्यते॥**[4]

एतस्य व्याख्यायां हेलाराजेनेत्थं प्रतिपादितम्-**"तदेवमाख्यातानियतकालास्तिक्रिया प्रतीयते। सैव च सत्ता नामपदात् सिद्धतया प्रतीयते भाव इति। अपूर्वापरो हि भावः शब्दशक्त्यनुरोधात् तिङन्तेनासादितपूर्वापरोऽभिधीयते पचतीति। कृता तु सिद्धरूपः पाकः इति"**।

---

1. वैयाकरणभूषणसारः- 1.5
2. निरुक्तम्- 1.1.12, महाभाष्यम्- 1.3.1
3. महाभाष्यम्- 1.3.1
4. वाक्यपदीयम्- 3.8.12

एतेन स्पष्टो भवति यद् भावरूपे तदर्थे वा धातुरेवावतिष्ठते, न त्वाख्यातरूपं क्रियारूपं वा। **"भावप्रधानमाख्यातम्"** इत्यस्य तात्पर्यमिदमेवास्ति यद् यत्र धातोः स्वकीयार्थ एव मुख्यः तथा यावद् तस्मिन् कालानुबन्धः समवेतो न भवति, सा स्थितिरेव भावः कथ्यते। तस्यां स्थितौ धातुरेवावतिष्ठते, न त्वाख्यातम्। धातोः मूलार्थ एव भावो भवति। तन्मूलार्थं तत्र कारकं तथा तत्प्राधान्येन युक्तमेव आख्यातं (तिङन्तः) कथ्यते। यथाहि-

**भाव एव हि धात्वर्थ इत्यविच्छिन्न आगमः।**[1]
**जायमानान्न जन्मान्यद् विनाशेऽप्यपदार्थता॥**
**अतो भावविकारेषु सत्तैका व्यवतिष्ठते॥**[2]

पतञ्जलिना प्रदत्ताः तिस्रः परिभाषाः अत्रैव (भावे) समाह्रियन्ते। अत एव यास्कादारभ्य भर्तृहरिं यावत् सर्वैरेव क्रियारूपम् आख्यातं भावप्रधानत्वेन उद्घोषितम्।

भावः क्रिया च- इत्यनयोः शब्दयोः मूलार्थगतम् अन्तरमस्ति। भावशब्दः **'भू'** धातोः क्रियाशब्दश्च **'कृ'** धातोः निष्पद्येते। तद्यथोक्तं पतञ्जलिना- **"का पुनः क्रिया? ईहा। का पुनरीहा? चेष्टा। का पुनश्चेष्टा? व्यापारः। कथं पुनर्जायते क्रियावचनाः पचादयः, यदेषां करोतिना समानाधिकरणम्। किं करोति? पचति। किं करिष्यति? पक्ष्यति।"**[3]

एवं प्रकारेण पतञ्जलिना **'करोती'**ति क्रियया कर्ताद्वारा कृतकारणात् क्रियावचनं कथ्यते। पुनश्च, धातुना स्वकीयैव भावना प्रधानतः अभिहितत्वात् तद् भावप्रधानं कथ्यते। अग्रे चैतेन उभयोः समन्वयस्य एवंविधः प्रयासः कृतः- काचन क्रियाः ईदृशाः भवन्ति यत्र **'किं करोति?'** इत्यस्योत्तरं न प्राप्यते। यथा- **'अस्ति, भवति इत्यादि। "अथ यद्येव क्रियावचनो धातुः इत्येष पक्षः। अथापि भाववचनो धातुःइति"**[4]।

अत्र भर्तृहरिणा हेलाराजेन च **"सत्त्ववचनो धातुः"** इत्युक्तः। अत्रत्यः सत्त्वशब्दः **अस्** धातुना निर्मितः। अतः एनम् अथवा सत्तामपि क्रियायाः भावस्य च समकक्षे स्वीकरणेऽर्थो भविष्यति- तिसृणां स्थितीनां त्रयाणामेव मूलधातूनां स्वीकरणम्। धातवः स्थितयश्चेमाः सन्ति- **अस्ति (अस्), भवति (भू), करोति (कृ)**। सहसैव न

1. वाक्यपदीयम्- 3.8.25
2. वाक्यपदीयम्- 3.8.28
3. महाभाष्यम्- 1.3.1
4. महाभाष्यम्- 1.3.1

संयोगो संस्कृते हिन्द्यां चैतत्समासु भारतीयभाषासु **अस्, भू, कृ** इत्येते समानार्थकाः धातव एव मूलभावे सहायकधातुरूपे वा स्वीकृताः सन्ति। यथा–

संस्कृते-**एध्- एधामास (अस्), एधाम्बभूव (भू) एधाञ्चक्रे (कृ)।**

हिन्द्याम्- खाता हूँ (है), खा रहा होता है (होता), खाया करता है (करता रूप में)।

सहायकधातूनामेषा धारणासंस्कृते **"कृभ्वस्तियोगः"** कथ्यते। यच्च वैयाकरणाः एतत् तथ्यं प्रति पूर्णजागरुकाः आसन्।

आचार्यपाणिनेः भिन्नशब्दशास्त्रप्रवाचकैः आचार्यैरपि स्व-स्वग्रन्थेषु धातोर्लक्षणं प्रदत्तं, यत्र कतिपयानि लक्षणानि इमानि–

(1) शाकटायनव्याकरणे (पाल्यकीर्तिप्रणीते) धातुसंज्ञाविधायकं सूत्रम्- **"क्रियार्थो धातुः"** (1.1.22) इति। अत्र व्याकरणोपरि अभयचन्द्रसूरिणा **प्रक्रियासंग्रह**नाम्नी टीका लिखिता। एतेन सूत्रस्यास्य व्याख्यां कुर्वता लिखितम्- **"क्रियार्थो धातुः"-क्रिया = परिणतिः प्रवृत्तिर्वा, सा अर्थो = वाच्यो यस्य स शब्दः धातुसंज्ञो भवति"**।

(2) कातन्त्रव्याकरणकारस्य आचार्यशर्ववर्मणः धातुसंज्ञाविधायकं सूत्रम्- **"क्रियाभावी धातुः"** (3.1.9) इति। अस्य सूत्रस्य व्याख्यायां व्याख्याकारेण लिखितम्- **"यः शब्दः क्रियां भावयति, प्रतिपादयति स धातुसंज्ञः भवति। यथा- भवति, गच्छति"** इत्यादयः।

(3) श्रीसिद्धहेमचन्द्रशब्दानुशासने आचार्येण एतेन सूत्रेण धातुः परिभाषितः- **"क्रियार्थो धातुः"** (3.1) इति। सूत्रस्यास्य स्वोपज्ञव्याख्यायामाचार्येण हेमचन्द्रेण लिखितम्- **"कृतिः क्रिया, प्रवृत्तिः व्यापार इति यावत्। पूर्वापरीभूता साध्यमानरूपा सा अर्थः अभिधेयं यस्य स शब्दः धातुसंज्ञः भवति एधते, भवतीत्यादयः। आयादिप्रत्ययान्तानामपि क्रियार्थत्वाद्धातुत्वम्-गोपायति, पापच्यते इत्यादयः।"**

अग्रिमायां पंक्तौ आचार्यो हेमचन्द्रः अन्वयव्यतिरेकाभ्यां धातोः क्रियार्थतां साधितवान्। तद्यथाचार्य आह- **"अन्वयव्यतिरेकाभ्यां च धातोः क्रियार्थत्वावगमः, तथाहि- पचतीत्यादौ धातुप्रत्ययसमुदाये संसृष्टिक्रियाकालकारकाद्यनेकार्थाभिधायिनि प्रयुज्यमाने धातोरेव क्रियार्थत्वमवगम्यते अन्वय-व्यतिरेकाभ्यां, नेतरेषाम्। पचतीति प्रयोगे द्वयं श्रूयते-पच् इति प्रकृतिः, अतिः इति च प्रत्ययः, अर्थोऽपि कश्चिद् गम्यते- विक्लित्तिः कर्तृत्वम्, एकत्वम्। पठतीति उक्ते कश्चित् शब्दो हीयते, कश्चिदुपजायते, कश्चिदन्वयी। पच्शब्दो हीयते, पठ्शब्द उपजायते, अति**

**शब्दः अन्वयी। अर्थोऽपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी। विक्लित्तिर्हीयते, पठिरुपजायते, कर्तृत्वम्, एकत्वं चान्वयी। तेन मन्यामहे-यः शब्दो हीयते, तस्यासौ अर्थः, योऽर्थो हीयते। यश्च शब्द उपजायते, तस्यासौ अर्थः, योऽर्थ उपजायते। यश्च शब्दः अन्वयी, तस्याऽसौ अर्थः, योऽन्वयीति"** इति।

पाश्चात्त्यमतानुसारं धातोः लक्षणं कुर्वता भारतीयेन आचार्येण यल्लिखितं तदाचार्यस्य पतञ्जलेः **क्रियावचनाद् भाववचनाच्च** अतिरिक्तं नास्ति, आंग्लभाषायां क्रमशः-Action Denoting G तथा Existance Denoting इति कथयितुं शक्यते। परं वर्गीकरणसमये पाणिनेः अनुकरणोपरि कात्यायनेन, पतञ्जलिना, भर्तृहरिणा च **कृ, भू, अस्** इत्येते सहायकाः आधारिणो वा धातव इति स्वीकृताः, अकथितरूपे त्रीणि रूपाणि स्वीकृतानि। यथा-**भाववचनः (भू), सत्तावचनः (अस्)** तथा **क्रियावचनः (कृ)** इति।

पाश्चात्त्येन प्रसिद्धविचारकेन **'ये स्पर्शन'** इत्याख्येनापि धातूनां त्रिधा विभाजनं स्वीक्रियते। प्रथमतः तेन **धातु**शब्दः सामान्यतः **'घटनाशब्दः'** (Phinomenon Words) इति कथ्यते। अनन्तरं एनं त्रिषु वर्गेषु विभागं करोति- **क्रियावचनः** (Action Denoting), **प्रक्रमवचनः** (Process Denoting) तथा **स्थितिः सत्तावचनो वा** (Condition Denoting)[1]

अस्मिन् विभाजने पूर्वोक्ताद् भारतीयविभाजनाद् इदमेव अन्तरं विद्यते यदत्र- **भाववचनस्य** स्थाने **प्रक्रमवचनः परिगणितः।** भारतीयधारणया अस्य एकमन्यमपि साम्यं विद्यते- षड्भावविचाराणां अयं हि एकः पृथक्प्रकारकः प्रतिनिधिः जायते। वस्तुतः भारतीया दृष्टिः एतादृशं कमपि पृथक्प्रकारं वचनं वा न स्वीकरोति यतस्तदनुसारं प्रक्रियायाः क्रमस्य भावना, धातोरेकवर्गेण सह सम्बद्धो न भूत्वा क्रियामात्रस्य आधारभूता अस्ति। क्रियायाः स्थितिरेव अस्यां क्रमभावनायामुपरि आश्रिता वर्तते। अनया दृष्ट्या भावसूचकस्य क्रमसूचकस्य च एक एव अर्थः महत्त्वं चावतिष्ठेते। अस्याः दशायाः उपयुक्तं नाम साध्यावस्था इत्यस्ति। तत्र धातुरित्यत्र ये स्पर्शनस्य भारतीयानाञ्च दृष्टिरित्थं विद्यते-

**धातुः = (घटनाशब्दः = क्रियाशब्दः)**

| | | | |
|---|---|---|---|
| ये स्पर्शनस्य दृष्टिः- | क्रियावचनः | स्थितिः/सत्तावचनः | प्रक्रमवचनः |
| भारतीयानां दृष्टिः- | क्रियावचनः | सत्तावचनः | भाववचनः |

1. द्रष्टव्य- सत्यकाम वर्माकृतव्याकरण की दार्शनिक भूमिका ('येस्पर्शन' मतस्योद्धरणम्), पृष्ठ-27,

उपर्युक्त प्राच्यपाश्चात्त्ययोः विवेचनानुसारं धातोः स्वरूपं निश्चित्य निष्कर्षतः कथयितुं शक्यते यद् धात्वर्थः भावोऽस्ति। यथाहि– यास्क–पतञ्जलि–भर्तृहरिप्रभृतीनाम् आचार्याणां मतानि आलोड्य भारतीयैः आचार्यैः **'भाव एव हि धात्वर्थः'** इत्युद्घोषणा कृता। अस्यैव **'भाव एव हि धात्वर्थः'** इति सिद्धान्तस्य परिधौ पाश्चात्त्यानां मतमपि अन्तर्भूतं जायते। भावस्य अभिप्रायस्तु फलेन व्यापारेण चोभाभ्याम् अस्ति। अतः धातोरर्थः **फलं व्यापारश्च** चोभौ भवतः। कर्तृस्थलेषु धातोः व्यापारवाचकता मुख्या भवति कर्मस्थलेषु च फलवाचकता मुख्या। तद्यथोक्तम्–

**फलव्यापारयोर्धातुराश्रये च तिङः स्मृताः।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥**[1]

एतत्सम्बन्धे भारतीयचिन्तनपरम्परायां पदशास्त्रे (व्याकरणे), वाक्यशास्त्रे (मीमांसायां) तथा प्रमाणशास्त्रे (न्याये) एषु त्रिष्वेव पर्याप्तो विचारः कृतो विद्यते। एषु त्रिषु वर्गेष्वपि न्यायस्य व्याकरणशास्त्रस्य च परम्परायां प्राच्यं नव्यं च मतं स्तः। एवं प्रकारेण एषां चिन्तकानां समुदायं पञ्च वर्गेषु उपस्थापयितुं शक्यते। तद्यथा– (1) प्राचीनो नैयायिकः, (2) नव्यो नैयायिकः, (3) मीमांसकः, (4) प्राचीनो वैयाकरणः (5) नव्यो वैयाकरणश्चेति। तत्र हि–

**1. प्राचीननैयायिकानां मते धात्वर्थः**– प्राचीननैयायिकैः व्यापारमात्रे धातोः शक्तिः स्वीक्रियते तथा फलं कर्मप्रत्ययस्य अर्थो मन्यते। तद्यथा– **"क्रियामात्रं (केवलं व्यापारमात्रम्) धात्वर्थः। फलन्तु कर्मप्रत्ययेन बोध्यते"**[2]।

**2. नव्यनैयायिकानां मते धात्वर्थः**– एतेषाम् अनुसारेण धातोः फलं व्यापारश्चोभौ अर्थौ भवतः। यथा– **"फलव्यापारौ धात्वर्थः"**[3]।

**3. मीमांसकानां मते धात्वर्थः**– मीमांसकानां मते धात्वर्थः केवलं फलमेवास्ति, व्यापारस्य बोधस्तु प्रत्ययेन भवति। यथाह– **"फलं धात्वर्थो, व्यापारः प्रत्ययार्थः"**[4]। तदनुसारं **'गम्'** धातोरर्थोऽस्ति– उत्तरदेशेन सह संयोगस्य प्राप्तिः, यन्निश्चय एव फलमस्ति। तिबादिप्रत्ययाः व्यापारस्य अर्थबोधं कारयन्ति तदा सर्वाभिः क्रियाभिः व्यापारसहितस्य फलस्य बोधो जायते। अनेन प्रकारेण फलप्राप्तये व्यापारस्य कल्पना अनिवार्या भवति।

---

1. वैयाकरणभूषणसारः– 1.2
2. तत्त्वचिन्तामणिः, न्यायकोशः–391 पृष्ठे उद्धृतम्।
3. परमलघुमञ्जूषा– धात्वर्थनिरूपणम्।
4. द्रष्टव्य– उमाशंकरशर्मात्रऋषिप्रणीत– कारकतत्त्वानुशीलन–42 पृष्ठे भाट्टचिन्तामणेर्वचन–स्योद्धरणम्।

**4. प्राचीनवैयाकरणानां मते धात्वर्थः**- एषो वर्गः फले व्यापारे च धातोः पृथक्-पृथक् शक्तिं स्वीकरोति। तद्यथा- **"फलव्यापारयोर्धातोः पृथक् शक्तिः"**[1]।

**5. नव्यवैयाकरणानां मते धात्वर्थः**- नव्यवैयाकरणसमुदायस्य मुख्यः प्रतिनिधिः आचार्यनागेशोऽस्ति। एतेन परमलघुमञ्जूषानामके ग्रन्थे स्वपूर्ववर्त्तीनां सर्वान् सिद्धान् पूर्वपक्षे उपस्थाप्येतेषां युक्तिपूर्वकं खण्डनं कृत्वा स्वकीयपक्षस्य सबलतापूर्वकं स्थापनं कृतम्। एतेषां मते धातोः शक्तिः फले व्यापारे चोभयोरस्ति परञ्च एतेन अत्र विशिष्टशक्तेः कल्पना कृता, अर्थात् फलविशिष्टे व्यापारे व्यापारविशिष्टे फले वाधातोः शक्तिः भवति एवञ्च फलविशेषणकव्यापारबोधे कर्तृप्रत्ययाः तथा व्यापारविशेषणकफलबोधे कर्मप्रत्ययाश्च नियामकाः भवन्ति। तद्यथा- **"फलावच्छिन्ने व्यापारे, व्यापारावच्छिन्ने च फले धातूनां शक्तिः। कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामकः"**[2] इति।



1. परमलघुमञ्जूषा- धात्वर्थनिरूपणम्।
2. परमलघुमञ्जूषा- धात्वर्थनिरूपणम्, पृष्ठ-87

# शृङ्गारप्रकाशदृष्ट्या बहुव्रीहिसमासविमर्शः

राहुलमाइतिः *

**उपोद्घातः**

जगति यानि व्याकरणानि शब्दसाधुतायै प्रवृत्तानि तेषु पाणिनीयव्याकरणमेव लौकिकवैदिकोभयशब्दप्रतिपादकत्वात् चिराय वरिवर्तीति। व्याकरणमिदमाश्रित्य बहवः ग्रन्थाः विरचिताः विद्वद्भिः। तत्रापि महाभाष्यवाक्यपदीयभूषणसारादयः ग्रन्थाः पाणिनीयतन्त्रस्य दार्शनिकत्वं व्याख्यान्ति, अन्ये च सिद्धान्तकौमुद्यादयः ग्रन्थाः प्रकियाभागं निर्वहन्ति। धाराधीशस्य भोजस्य तावत् प्रथमायां कोटौ अन्तर्भावः। यद्यपि राजा भोजः साक्षात् कमपि ग्रन्थं न रचयामास यत्र पाणिनीयतन्त्रस्य दार्शनिकविषयाः उपनिबद्धाः सन्ति, तथापि तत् विरचितस्य शृङ्गारप्रकाशाख्यालङ्कारग्रन्थस्य आदिमे भागे ते विषयाः सोत्साहेन तैः स्पृष्टाः सन्ति। तेषु च विषयेषु समासोऽन्यतमः। अतः अत्र प्रबन्धे शृङ्गारप्रकाशग्रन्थदिशा बहुव्रीहिसमासस्य स्वरूपं विचार्यते।

आदौ एव प्रश्नः स्यात् शृङ्गारप्रकाशः खलु आलङ्कारिकनिकायप्रसिद्धः ग्रन्थः। कथमनेन सह व्याकरणस्य सम्बन्धः इति। तत्र उत्तरमस्ति- शब्दार्थयोः साहित्यं काव्यमिति मन्यमानः धाराधीशः भोजराजः ग्रन्थादावेव उक्तवान् शब्दः कः, अर्थः कः, तयोश्च साहित्यं नाम किम् इति। शब्दः कः इति प्रश्ने एव सर्वेऽपि व्याकरणविषयाः समागताः सन्ति, अत एव तान् विषयान् विस्तशः प्रतिपादयन् ग्रन्थमग्रे निनाय ग्रन्थकारः। दृश्यते च अयमेव क्रमः भाष्ये। भाष्यकारोऽपि कस्तावात् शब्दः इति प्रश्नं सोत्तरं ग्रन्थादौ समादधाति। अत्र च उभयोरपि सिद्धान्ते समानता दृश्यते। यथा पस्पशायां भाष्यकारैरुक्तं- "प्रतीतपदार्थको लोके ध्वनिः शब्दः इत्युच्यते"[1]। भाष्यवचनमेव अङ्गीकृत्य भोजराजः लिलेख- "येनोच्चारितेन अर्थः प्रतीयते"[2] सः शब्दः इति शेषः। अर्थविषयेऽप्युक्तं

* शोधच्छात्रः संस्कृतदर्शनविभागः, रामकृष्णमिशन्विवेकान्दशैक्षणिकशोधसंस्थानम् वेलुडमठम्, हाओडा, 711202, पश्चिमबङ्गः

1. उद्योतप्रदीपलक्ष्मीशब्दकौस्तुभविराजितम् महाभाष्यम्, पत्रसंख्या- 14
2. शृङ्गारप्रकाशः, प्रथमप्रकाशः, पत्रसंख्या- 3

तैः "यः शब्देन प्रत्याय्यते"[1] इति सः अर्थः। तयोः शब्दार्थयोश्च साहित्यं काव्यमिति। इत्थमत्र ग्रन्थारम्भादेव व्याकरणस्थाः विषयाः सप्रसङ्गं वर्णिताः ग्रन्थकारैः।

पाणिनीयादितन्त्रेषु अव्ययभावादिभेदेन समासस्य चातुर्विध्यं परिलक्ष्यते, क्वचिच्च वरदराजाचार्यानुरोधेन केवलसमासाख्यः अवान्तरभेदोऽपि दृग्गोचरीभवति। तत्कल्पनया च समासस्य पञ्चभेदान् निरूपितवन्तः केचन विद्वांसः। एवञ्च तत्पुरुषसमासस्यापि अवयवानां सामानाधिकरण्ये कर्मधारयसंज्ञा विहिता, संख्यापूर्वकत्वे च द्विगवाख्या समासभेदोऽपि प्रसिद्धः। द्वन्द्वसमासस्यापि चार्थभेदेन इतरेतरसमाहाराख्यं च द्वैविध्यं प्रत्यपादि आचार्यैः।

**प्रायोवादः**

यद्यपि पूर्वपदप्रधानो अव्ययीभावः, उत्तरपदार्थप्रधानो तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः इति अव्ययीभावादीनां समासानां लक्षणं लोकप्रसिद्धं तथापि तत् अव्याप्ति-अतिव्याप्त्यादिदोषग्रस्तत्वात् शास्त्रविरुद्धमेव भाति। यथा हि भूतपूर्वः, दृन्भूः, करभूः, वागार्थाविव, विस्पष्टपटुः इत्यादिषु लक्षणं नान्वेति। उन्मत्तगङ्गमित्यादिषु अपि पूर्वपदार्थप्राधान्याभावात् अव्ययीभावत्वं न सङ्गच्छते। एवमेव अन्यपदार्थप्रधानो बहुव्रीहिरिति लक्षणास्यापि उदाहरणेऽस्मिन् अव्याप्तिदोषः स्यात्। शाकप्रति इत्यत्र च उत्तरपदार्थप्राधान्यात् तत्पुरुषलक्षणस्यातिव्याप्तिः, अव्ययीभावस्या-व्याप्तिश्च। अन्यपदार्थे च संज्ञायां (2.1.21) सुप्प्रतिना मात्रार्थे (2.1.9) इति सूत्रप्रामाण्यात्। इत्थमेव अर्धं पिपल्याः अर्धपिप्पलीति तत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वात् अव्ययीभावस्याति-व्याप्तिः, उत्तरपदार्थप्राधान्याभावात् तत्पुरुषलक्षणस्याव्याप्तिश्च। तत्र अर्धं नपुंसकम् (2. 2.2) इति सूत्रेण समासविधानात्। एवमेव द्वौ वा त्रयो वा इत्यत्र संख्याव्ययासन्न-दूराधिकसंख्यायाः संख्येये (2.2.25) इति सूत्रेण यद्यपि बहुव्रीहिसमासः विहितः तथापि उभयपदार्थप्राधान्यानुरोधेन द्वन्द्वसमासत्वापत्तिः, बहुव्रीहेः अनापत्तिश्च स्यात्। अत एतेषु लक्षणेषु दोषसद्भावादेव सिद्धान्तकारिकाकारः भट्टोजिदीक्षितः आह-

**समासस्तु चतुर्धेति प्रायोवादस्तथापरः।**
**योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च॥**[2]

अष्टाध्याय्यां पाणिनीयसूत्रपर्यालोचनेन ज्ञातुं शक्यते यत् अव्ययीभावः (2.1.5), तत्पुरुषः (2.1.22), शेषो बहुव्रीहिः, चार्थे द्वन्द्वः (2.2.29) इत्येतानि सूत्राणि संज्ञासूत्राणि

---

1. शृङ्गारप्रकाशः, प्रथमप्रकाशः, पत्रसंख्या- 3
2. वैयाकरणसिद्धान्तकारिका, समासशक्तिविमर्शः, श्लोकसंख्या- 29, पत्रसंख्या- 31

सन्ति अधिकारसूत्राण्यपि। अव्ययीभावः इति सूत्रेण यथा अव्ययीभावः इति संज्ञा क्रियते, तद्वत् एतत् पदं तत्पुरुषात् प्राग् अधिक्रियते अपि। अतः परसूत्रेषु तत्पदान्वयेन सूत्रार्थः भवति अव्ययं विभक्तिसमीपसमृद्धव्यृद्ध्यर्थाभावात्या-सम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु (2.1.6) इत्यादिसूत्रैः विहितानाम् अव्ययीभावसंज्ञा भवति, समाससंज्ञा अपि। प्राक्कडारात्समासः इति सूत्रे आकाडरात् इत्येव सिद्धे प्राग्ग्रहणात् एकसंज्ञाधिकारेऽपि संज्ञानां समुच्चयसिद्धौ न दोषः इति भावः। एवमेव तेषां सूत्राणां पर्यालोचनेन अव्ययीभावादीनां लक्षणमित्थं वक्तुं शक्यते-अव्ययीभावाधिकारे विहितत्वम् अव्ययीभावत्वम्, तत्पुरुषाधिकारे विहितत्वं तत्पुरुषत्वमिति। एवमग्रेऽपि ऊह्यम्।

अत एव भट्टोजीदिक्षितैः सिद्धान्तकारिकायां अन्यथैव समासस्य भेदः वर्णितः। तैः समासघटकपदानां पदत्वहेतुनिबन्धनात् समासस्य षट्भेदाः कल्पिताः सन्ति। तैरुक्तम्-

**सुपां सुपा तिङां नाम्ना धातुनाऽथ तिङां तिङा।**
**सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः॥**[1]

समसास्य भेदविषये पाणिनीयतन्त्रे अयमेव सिद्धान्तः सर्वैः आदृतो वर्तेत। सुपां सुपा इत्युक्ते यत्र समासे समासघटकमपि द्वयमपि पदं सुबन्तं वर्तते, तत्रायं समासः सुप्सुपा समासः इति। यथा राजपुरुषः इत्युदाहरणं तस्य। इत्थमत्र सुपा तिङा इत्यस्य तात्पर्यमस्ति- यत्र समासे पूर्वपदं सुबन्तम् उत्तरपदञ्च तिङन्तं भवति, तत्र सुपां तिङन्तेन समासः इत्युच्यते, तद्यथा- पर्यभूषयत् इति। अत्र हि गतिमतोदात्तवता तिङाऽपि समासः इति वार्तिकबलेन समासः ज्ञेयः। एवञ्च सुबन्तेन नाम्नोऽपि समासः दृश्यते। यत्र समासे प्रथमं पदं सुबन्तं भवति, परन्तु द्वितीयं पदं सुबुत्पत्तेः प्रागेव समासघटकत्वेन अन्वेति, तदा सः समासः सुपां नाम्ना समासोऽयमुच्यते। समासस्योदाहरणं यथा- कुम्भकार इति। अत्र हि उपपदमतिङ् (2.2.19) इत्यनेन योगेन समासः। स च "गतिकारकोपपदानां कृद्भिः समासवचनं प्राग्सुबुत्पत्तेः" इति परिभाषया सुबत्पत्तेः प्रागेव समासः। चतुर्थः प्रभेदस्तावत् सुपां धातुना सह समासः। यत्र समासघटकपदयोर्मध्ये प्रथमं पदं तावत् सुबन्तम्, उत्तरपदञ्च धातुमात्रं वर्तते, स एव सुपां धातुना समास इत्युच्यते। अत्रोत्तरपदत्वेन धातोरेव ग्रहणं न सुप्तिङन्तयोरिति। समासस्यास्य उदाहणं यथा कटप्रूः आयतस्तुः इति। अत्र हि "क्विब्वचिप्रच्छयायतस्तुकटप्रुजुश्रीणां दीर्घश्च" इति वार्तिककारानुरोधेन समासः। ततश्च पञ्चमः प्रभेदः तिङन्तेन तिङन्तस्य समासः। आख्यातमाख्यातेन क्रियासातत्ये इति मयूरव्यंसकाद्यन्तर्गणसूत्रात् भवति तिङ्न्तेन तिङन्तस्य

1. वैयाकरणसिद्धान्तकारिका, समासशक्तिविमर्शः, श्लोकसंख्या- 28, पत्रसंख्या- 30

समासः, तद्यथा- पिबतखादता, पचतभृज्जता इत्यादि। अन्तिमश्च प्रभेदः तिङन्तेन सुबन्तस्य समासः, क्वचित् पूर्वपदं तिङन्तमपि सुबन्तेन समस्यते। तद्यथा-जहिस्तम्बः इति। एते च षड्भेदाः समासस्य पाणिनीयतन्त्रसिद्धाः भेदाः।

### शृङ्गारप्रकाशदिशा बहुव्रीहिसमासः

एतावता पाणिनीयतन्त्रमाश्रित्य समासस्य भेदाः विस्तरशः मया वर्णिताः। अधुना मत्प्रतिपाद्यविषयमवगाहे। धाराधीशः भोजः स्वीये शृङ्गारप्रकाशाख्ये ग्रन्थे समासस्य वैचित्र्यपूर्णमेव भेदं कल्पितवान्। तन्मते द्वादशशब्दभेदेषु कश्चन प्रातिपदिकशब्दः। प्रातिपदिकमपि शब्दस्वरूपं विभक्तावयवम् अविभक्तावयवम् अनुकरणावयवमिति भेदेन त्रैविध्यं भजते। विभक्तावयवरूपप्रातिपदिकञ्च कृत्तद्धितसमासभेदेन रूपत्रयं गृह्णाति। समासरूपविभक्तावयवं प्रातिपदिकं पुनः प्राकृतवैकृतशेषभेदेन त्रिविधं याति। एवञ्च तस्यैव प्राकृतसमासरूपविभक्तावयवस्य अव्ययीभावादयः चत्वारः भेदाः ग्रन्थकृता विनिर्मिताः। अत्र प्रबन्धे ग्रन्थोक्तदिशा बहुव्रीहिसमासस्य स्वरूपम् आलोच्यते।

यद्यपि बहुव्रीहिसमासस्य लक्षणविषये भोजराजपाणिनीयतन्त्रमनुसरति, तथापि बहुव्रीहिसमासस्य भेदविषये तयोर्मध्ये भेदः दृश्यते। बहुव्रीहेः अवान्तरं न कश्चन भेदः पाणिनीयतन्त्रे दृश्यते परन्तु भोजनये बहुव्रीहिसमासोऽयं प्रधान्यसम्बन्ध्यर्थः, अप्रधान-सम्बन्ध्यर्थः, कारकार्थश्च इति भेदेन त्रैविध्यं भजते।

### 1. प्रधानसम्बन्ध्यर्थः बहुव्रीहिः

ननु कोऽयं प्रधानसम्बन्ध्यर्थः इति। सम्बन्धम् अनयोरस्ति इत्यर्थे अत इनिठनौ (5.2.115) इति सम्बन्धशब्दात् इनिप्रत्यये सम्बन्धीशब्दः निष्पद्यते, तस्य समासघटकं पदमित्यर्थः। सम्बन्धिनः अर्थः सम्बन्ध्यर्थः, स च प्रधानः यत्र सः प्रधानसम्बन्ध्यर्थः इति तत्पुरुषगर्भोऽयं बहुव्रीहिः। अत्रोच्यते- यत्र बहुव्रीहिसमासे समासघटकपदाभ्याम् अर्थात् सम्बन्धिभ्यां निष्पन्नं यत् समस्तं पदं सिध्यति, तस्मिन् समस्ते पदे द्वयोरपि प्रधान्यं यदा परिलक्ष्यते तदा स समासः प्रधानसम्बन्ध्यर्थो बहुव्रीहिरिति कथ्यते। अर्थात् समस्तं यत् प्रथमान्तं पदं तस्मिन् समासनिष्पन्ने समस्ते पदे समासघटकपदयोर्सम्बन्धः स्याद् एव। तेनैव प्रथमान्तप्रधानोऽयं समासः।

समासस्य अस्य उदाहरणं यथा- दक्षिणपूर्वा इति। दक्षिणस्या पूर्वस्या च दिशयोः अन्तरालं या दिक् सा दक्षिणपूर्वा इति। अत्र दिङ्नामान्तराले (2.2.26) इति योगेन समासः। अत्र समासबद्धपदे समासघटकमुभयमपि सम्बध्यते। उभयोः दिशोर्मध्ये या

दिक् सा एव दक्षिणपूर्वा इत्युच्यते, इत्यतः उभयोरपि समानप्राधान्यं वर्तते। अत्र द्वाभ्यां सम्बन्धिभ्यां निष्पन्ने पदे एव प्रधान्यत्वात् सिध्यति अयं समासः। भाष्यकारोऽपि तस्य प्राधान्ये आह– "दिक्समाससहयोगयोश्च अन्तरालप्रधानाभिधानात्" इति।

अस्य समासस्य अन्यानि उदाहरणानि यथा– दक्षिणापरा, सहाग्निना वर्तते साग्निः इति। अत्र हि अन्यपदार्थे अग्नि-सहवाच्यपदयोश्च समप्राधान्यं वर्तते। एवमेव सवंशपुत्रः, अत्रान्यपदार्थः पिता इति, पितरि हि वंशपुत्रशब्दयोः उभयोरपि अन्वयः। एवमेव केशेषु केशेषु गृहीत्वेदं युद्धं प्रवर्तते इति केशाकेशि, दण्डैश्च दण्डैश्च प्रहृत्य दण्डादण्डि। सर्वत्र अत्र प्रथमान्तं पदं प्रधानम् अन्यपदार्थभूतम्। प्रथमान्तमित्युक्ते समासनिष्पन्नं पदमित्यर्थः। अत एव दिङ्नामान्यन्तराले (2.2.26) इति सूत्रे न्यासकारः आह– "प्रथमार्थेऽपिचायम् (समास)[1]" इष्यते इति।

## 2. अप्रधानसम्बन्ध्यर्थः बहुव्रीहिः

बहुव्रीहिसमासस्य द्वितीयविभागस्तु– अप्रधानसम्बन्ध्यर्थो बहुव्रीहिरिति। अस्य समासस्य लक्षणमित्थं वक्तुं शक्यते यत्– यत्र बहुव्रीहिसमासे समासघटकपदयोः सम्बन्धिनोः प्राधान्यं न तिष्ठति, अपि तु तयोर्मध्ये सम्बन्धेन निष्पन्नस्य अन्यपदार्थस्य प्राधान्यं भवति, स एव अप्रधानसम्बन्ध्यर्थो बहुव्रीहिरिति। अर्थाद् अत्र वास्तविकतया अन्यपदार्थस्यैव प्राधान्यं भवति, अस्य समासस्यैव लोके बहुव्रीहित्वेन वस्तुतः प्रसिद्धिरस्ति। अस्य समासस्योदाहरणं यथा– चित्रा गावोऽस्य इति चित्रगुः इत्यत्र अनेकमन्यपदार्थे (2. 2.24) इति सूत्रेण समासः। अत्र समासघटकपदयोः एकीभवने यत् पदं सिध्यति, तत्र समासघटकपदयोः अर्थः एव नास्ति। प्रकृते उदाहरणे चित्रमिति वर्णविशेषः, गौरिति सास्नादिमत्प्राणिविशेषः परन्तु ताभ्यां पदाभ्यां निष्पन्नस्य शब्दस्य अर्थः अस्ति चित्रगवां स्वामी, व्यक्तिविशेषः इति। अर्थाद् अत्र समासे सम्बन्धी नाम समासघटकं पदम्, अप्रधानं वर्तते, इत्यतः अयम् अप्रधानसम्बन्ध्यर्थो बहुव्रीहिरिति। षष्ठ्यन्तं हि यत् तद् अत्र प्रधानम्। यथा अत्र यस्य गावः देवदत्तस्येति स एव अन्यपदार्थः। समासस्यास्य अन्यानि उदाहरणानि यथा– अविद्यमाना भार्या अस्य इति अभार्यः पुरुषः। उष्ट्रस्येव मुखमस्य उष्ट्रमुखः, कण्ठे काल अस्य इति कण्ठेकालः, केशसंहारः चूडा अस्य इति केशचूडः, अत्र सर्वेषूदाहरणेषु सप्तम्युमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्य इति वार्तिकेन समासो सञ्जातः।

---

1. दिङ्नामान्यन्तराले सूत्रस्य काशिकाव्याख्या। न्यासे पत्रसंख्या– 378।

### 3. कारकार्थो बहुव्रीहिः

भोजराजोक्तः बहुव्रीहिसमासस्य तृतीयः प्रभेदस्तावत् कारकार्थो बहुव्रीहिरितिः। कारकस्यार्थः कारकार्थः। किं नाम कारकमिति चेदुच्यते– क्रियाजनकं हि कारकमिति कारकस्य प्रसिद्धं लक्षणम्। तस्य कारकस्य अर्थः यदा बहुव्रीहसमासे प्राधान्येन भासते तदा स कारकार्थो बहुव्रीहिरित्युच्यते। अत एव लक्ष्यघटकपदविश्लेषणेन अस्य समासस्य लक्षणमित्थं वक्तुं शक्यते यत्– यत्र बहुव्रीहिसमासे कर्मादयो हि अर्थाः प्राधान्येन प्रतीयन्ते, तदा स समासः कारकार्थो बहुव्रीहिरिति संज्ञामुपचर्यते। समासेऽस्मिन् द्वितीयादिवाच्यं कर्मादिकारकमेव समासार्थः।

अस्योदाहरणं यथा– आरूढो वानरो यं स आरूढवानरः इति वृक्षः इति अन्यपदार्थः। अनेकमन्यपदार्थे (2.2.24) इति सूत्रेण अत्र समासः। अत्रोदाहरणे वानरकर्तृकारोहणक्रियायाः फलाश्रयभूतस्य अन्यपदार्थस्य वृक्षस्यैव प्राधान्यं समासेन विवक्षितमिति कृत्वा अयं कारकार्थो बहुव्रीहिसमासः।

इत्थमत्र ऊढः रथो येन सः ऊढरथः इत्युदाहरणे येन ऊढः तस्यैव प्राधान्यम्। अनेकमन्यपदार्थे इत्यनेन च समासः ज्ञेयः। प्रकृते उदाहरणे तृतीयावाच्यं कर्तृकारकं प्रधानं, कर्तृकरणयोस्तृतीया (2.3.18) इत्यनेन अत्र विग्रहे तृतीयाविभक्तिः कर्तृत्वशक्तिमति वर्तते। इत्थमेव सम्प्रदानकारकस्य प्राधान्ये उदाहरणं यथा–उपहृतपशुः इति। उपहृतः पशुः यस्मै सः उपहृतपशुः रुद्ररिति अन्यपदार्थः अत्र। सम्प्रदानकारकार्थस्यैव हि अत्र समासे प्राधान्यमिति यावत्। एवम् उद्धृतौदनाः, बहुमातङ्गम् इत्यादीनि अस्य समासस्य उदाहरणानि सन्ति।

### पदसंख्यानुरोधेन बहुव्रीहिसमासः

एतावता शृङ्गारप्रकाशदिशा समासघटकपदयोः प्राधान्यानुरोधेन बहुव्रीहिसमासस्य भेदः सविस्तरं विचारितः। राज्ञा भोजेन अन्यथाऽपि बहुव्रीहेः भेदः कल्पितः अतः तस्मिन् विषये समासेन आलोच्यते अत्र।

सुप्सुपा समस्यते इति सूत्रस्य सामान्यः अर्थः उक्तः विद्वद्भिः समर्थं सुबन्तं समर्थेन सुबन्तेन सह समस्यते इति। अधुना संशयः ननु सूत्रे सुप् इत्यपि एकवचनं सुपा इत्यपि एकवचनं तर्हि किम् द्वाभ्यां पदाभ्यामेव समासः भवति उत ततोऽधिकानामपि इति। तत्राह शृङ्गारप्रकाशकारः–"उपलक्षणं चेह सुबन्ताभ्यामित्यादिषु द्विवचनम्। तेन यथा द्वाभ्यां तथा त्रिभिर्बहुभिश्च समासो भवति"[1] इति। अर्थात् सूत्रे लिङ्गसंख्या–

1. शृङ्गारप्रकाशः, प्रथमप्रकाशः, पत्रसंख्या– 47

ग्रहणमतन्त्रमिति सिद्धान्ताद् अत्र प्रकृते सुबन्तं सुबन्तेन समासे भवति इति तु न, अपि तु द्वयोः ततोऽधिकानां वा समर्थानां पदानां समासः भवतीति। इदानीं समासघटकपदानां संख्यामाश्रित्यापि समासं विभाक्तुं शक्यते इति धिया तैरुक्तम्–

1. अव्ययीभावः कर्मधारयश्च द्वाभ्याम्।
2. षष्ठीलक्षणः कालपरिमाणलक्षणश्च तत्पुरुषः द्वाभ्याः त्रिभिश्च।
3. बहुव्रीहिद्वन्द्वौ द्वाभ्यां त्रिभिबहुभिश्च।

अत्र तृतीये प्रभेदे बहुव्रीहिसमासस्य संग्रहो वर्तते। तदनुरोधेन स एव अत्र संक्षेपेण आलोच्यते। अनेकमन्यपदार्थे (2.2.24) इति सूत्र एव भगवता पाणिनिना कण्ठरवेण उक्तम् अनेकमिति, तेनैव ज्ञायते यत् बहुव्रीहिसमासोऽयम् अनेकपदानां मध्ये एव भवति। अर्थात् सूत्रकृत्प्रामाण्यात् समासोऽयं द्वयोः ततोऽधिकानां वा भवतीति। तस्योदाहरणं यथा– चित्रगुः, अत्र हि द्वाभ्यां पदाभ्यां बहुव्रीहिरिति। पञ्चगवधनः इत्यत्र हि पञ्च गावः धनं यस्य सः इति अनेकपदानां समासे पञ्चगवधनः इति सिध्यति अतोऽयम् अनेकपदानां बहुव्रीहीरिति। एवमेव महाभाष्ये प्रयोगः अस्ति–

**सुसुक्ष्जटकेशेन सुनताजिनवासया।**
**समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति।।**

**द्वन्द्वो यावद्भिरारब्धः प्राधान्यं तत्र तावताम्।**
**इतरेतरयोगे स्यात् समाहारे तु संहते।।**[1]

अत्र हि शोभनाः सूक्ष्माः जटाः केशा अस्य सः सुसुक्षमजटकेशः, शोभनं नतमजिनं वासोऽस्य, संजातान्यन्तेषु शितिरन्ध्राण्यस्येति कर्मधारयादिगर्भा एत बहुव्रीहयः, एवञ्च त्रिष्वपि उदाहरणेषु अनेकपदानामेव समासः। इत्थमत्र समासघटकपदानां संख्यानुरोधेनापि समासं विभक्तुं शक्यते इत्येव ग्रन्थकृदाशयः।

**उपसंहारः**

बहुव्रीहिसमासस्य ये विभागाः विदुषा ग्रन्थकृता राज्ञा भोजेन दर्शिताः, ते पाणिन्यादिभिः तन्त्रैः अत्यन्तं विलक्षणतां भजते इति तु वक्तुं न शक्यते। तैः प्रदत्ते उदाहरणे अपि प्राचीनाचार्याणाम् अनुकरणं स्पष्टं प्रतीयते। परन्तु यया दृष्ट्या एते विभागाः निर्धारिताः सा दृष्टिरेव अत्युद्भूता नवीना विशिष्टा च वर्तते। पाणिन्यादितन्त्रे कृतभूरिपरिश्रमैः विद्वद्भिः बहुव्रीहिसमासस्य एतादृशः विभागस्तु पूर्वं नैव कल्पितः।

---

1. महाभाष्यम् , समर्थसूत्रभाष्यम्।

परन्तु उदाहरणानि सूक्ष्मेक्षिकया विश्लेषणेन एव ज्ञातुं शक्यते यत् भोजोक्तविभागस्तु सारगर्भयुतरेव। अत्यन्तं विस्तरशः पर्यालोचनं विना एते विभागाः कल्पयितुमेव न शक्यते, तथापि राज्ञा भोजेन एतादृशः विभागः कल्पितः इत्येव ग्रन्थकर्तुः महत्त्वमिति। इति शम्।

### सहायकग्रन्थसूची


1. भोजदेवः। 1937। सरस्वतीकण्ठाभरणम्। चिन्तामणिः, टि, आर् (सम्पा.)। माद्रासः, मद्रासविश्वविद्यालयः।
2. भोजदेवः। 1498। सरस्वतीकण्ठाभरणम्। भट्टाचार्यः, जीवनान्दविद्यासागरः (सम्पा.)। कलिकाता, नारायणयन्त्रालयः।
3. भोजदेवः। 1956। शृङ्गारप्रकाशः (अष्टमः प्रकाशात्मकः)। रामानुजज्योतिषिकः (सम्पा.)। मैसूर्, कारोनेषन्मुद्रालयः।
4. भोजदेवः। 1939। शृङ्गारप्रकाशः (प्रथमाद्वितीयौ प्रकाशात्मकौ)। शास्त्री, पि. पि. सुब्रह्मण्यः (सम्पा.)। मद्रासः श्रीविनिलास-प्रेस्।
5. बल्लादेवः। 1971। भोजप्रबन्धः (संस्कृतहिन्दीव्याख्योपेतः)। मिश्रः जगदीशलालः (सम्पा)। वाराणसी, मोतीलालबनारसीदासः।
6. भट्टोजिदीक्षीतः। 2016। वैयाकरणसिद्धान्तकौमुदी (श्रीधरमुखोल्लासिनी टीकोपेता)। शर्मालक्षी (सम्पा.)। वाराणसी, चौखम्बासुरभारतीप्रकाशनम्।
7. भर्तृहरिः। 2014। वाक्यपदीयम् (प्रतिभा हिन्दीव्याख्योपेतम्)। खण्डुडी, सत्यनारायणः (सम्पा.)। वाराणसी, चौखम्बाकृष्णदासअकादमी।
8. रामकृष्णाचार्यः। 2010। भूषणसारतत्त्वप्रकाशिका। शतपथी, हरेकृष्णः (सम्पा.)। तिरूपति, राष्ट्रियसंस्कृतविद्यापीठम्।
9. नागेशः। 2006। वैयाकरणसिद्धान्तमञ्जुषा। नई दिल्ली, राष्ट्रियसंस्कृतसंस्थानम्।
10. पतञ्जलिः। 2014। महाभाष्यम् (प्रदीपोद्योतसमुल्लसितम्)। जोशी, भार्गवशस्त्री (सम्पा.)। दिल्ली, चौखम्बासंस्कृतप्रतिष्ठानम्।
11. भट्टोजिदीक्षितः। 1961। वैय्याकरणसिद्धान्तकौमुदी (द्वितीयभागः, बालमनोरमा-तत्त्वबोधिनी टीकोपेता)। शर्मा, गिरिधरः, शर्मा परमेश्वरानन्दः (सम्पा.)। वाराणसी, मोतीलालबनारसीदासः।

12. नागेशभट्टः। 1977। वैयाकरणसिद्धान्तमञ्जूषा। शुक्लः, कालिकाप्रसादः (सम्पा.)। वाराणसी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः।

13. वामनजयादित्यौ। 1984। काशिका (भावबोधिनी हिन्दीव्याख्योपेता)। त्रिपाठी, जयङ्करलालः (सम्पा.)। वाराणसी, तारा प्रिटिंग वर्क्स।

14. आनन्दवर्धनः। 2006। ध्वन्यालोकः (प्रकाशव्याख्योपेतः)। पाठकः, जगन्नाथः। वाराणसी, चौखम्बाविद्याभवनम्।?



# शाब्दिकनये तादर्थ्यसमीक्षणम्

**मलयमाइतिः** *

**उपोद्घातः**

चतुर्थीविभक्तिर्हि वाचिका- सम्प्रदानादिकारकसम्बन्धस्य। सम्बन्धेष्वपि कारकेतरेषु चतुर्थ्यन्तप्रयोगे तादर्थ्यस्य प्रयोगः मुख्यतया दृश्यते। सामान्यतया अभिधानादिपर्यालोचनेन तदर्थशब्दस्य अर्थः- तदुद्देश्यकः, तत्प्रयोजनको वा। यथा- **रामः श्यामाय पुस्तकं क्रीणाति** इत्यस्मिन् वाक्ये श्यामाय इत्यत्र या चतुर्थीविभक्तिर्दृश्यते सा तादर्थ्ये विहिता। श्यामप्रयोजनकं रामकर्तृकं पुस्तकर्मकं क्रयणमिति वाक्यार्थः। अत्र श्यामपदार्थः क्रयणक्रियायां प्रयोजनं भवति।

परन्तु सः अर्थः व्यस्तसमस्तयोः भिद्यते सामर्थ्यबलात्। व्यस्तप्रयोगे वाक्ये उदाहरणं पूर्वमेव दृष्टम्। तत्र प्रयोजनसामान्यं तादर्थ्यचतुर्थ्या गम्यते। समस्ते यथा- **स्वर्णकारः कुण्डलहिरण्यं क्रीणाति** इति। अत्र कुण्डलहिरण्यमिति समस्तं पदम्। कुण्डलाय हिरण्यमिति विग्रहे तदर्थसमासनिष्पन्नः स शब्दः। लौकिकविग्रहे या चतुर्थी दृश्यते सा तादर्थ्ये एव विहिता। परन्तु समासवशात् तयोः कुण्डलहिरण्ययोः प्रकृतिविकृतिभावः वर्तते इति अधिकं ज्ञायते। प्रकृतिः हिरण्यं, विकृतिस्तु कुण्डलम्। अत्र तादर्थ्ये चतुर्थी वाच्या इति वार्तिकेन तादर्थ्ये चतुर्थीविभक्तिः विधीयते। तत्रैव चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः इति सूत्रं तादर्थ्ये विहितस्य चतुर्थ्यन्तस्य तत्सामर्थ्यविशिष्टेन सुबन्तेन समासमपि शास्ति। परन्तु उभयत्र तादर्थ्यलभ्यः अर्थः सम्बन्धो वा भिद्यते। वस्तुतः तादर्थ्यशब्देन नैके सम्बन्धाः गम्यन्ते, तेषु कः समासलभ्यः कश्च इतरत्र गम्यते स एवात्र विचार्यते।

**तादर्थ्यशब्दनिर्वचनम्**

तदर्थः इत्यस्य समस्तपदस्य द्विधा विग्रहं कल्पयितुं शक्यते। तत्रादौ तस्मै प्रकृत्यर्थाय इदम्- इति लौकिकविग्रहेण **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (2.1.**

---

* शोधच्छात्रः, संस्कृताध्ययनविभागः, हैदराबाद्-विश्वविद्यालयः, हैदराबाद्, 500046

**36 )** इति पाणिनीयसूत्रेण चतुर्थीसमासेन निष्पन्नः तदर्थशब्दः। **अर्थेन नित्यसमासः विशेष्यलिङ्गता चेति वक्तव्यम्** इति पूर्वोक्तसूत्रस्थवार्तिकं तदर्थशब्दस्य विशेष्यनिघ्नता नित्यसमासत्वं च शास्ति। अत्र तदिति शब्दः कार्यं निर्दिशति, समासेन च तस्य कार्यस्य प्रयोजकः निर्दिश्यते।

सः अर्थः (प्रयोजनं) यस्य इति विग्रहे अपरश्चायं तदर्थशब्दः अन्यपदार्थकः बहुव्रीहिसमासनिष्पन्नः विशेष्यनिघ्नश्च। ततः तदर्थस्य भावः इत्यर्थे उभयत्रापि ष्यञ्प्रत्ययेन तादर्थ्यशब्दो निष्पन्नः। अतः **समासकृत्तद्धितेषु भावप्रत्ययेन सम्बन्धाभिधानम्** इति न्यायेन आद्ये कार्यकारणभावरूपः सम्बन्धः अर्थः[1]। सामान्येन समासरहितस्थलेषु तादर्थ्येन उपकार्योपकारकभावरूपसम्बन्धः द्योत्यते[2]। समासे तु विशिष्य प्रकृति-विकृतिभावरूपः सम्बन्धः द्योत्यते इति परं वितन्यते।

### तादर्थ्यशब्दार्थविचारः

उभयोः निर्वचनयोर्मध्ये आद्यविग्रहे चतुर्थीविभक्तिः दृश्यते। तस्मै इदम् इति विग्रहेण चतुर्थीसमासेन निष्पन्नः तदर्थशब्द एवात्र समालोच्यमानः विषयः। तस्मै इदम् इति विग्रहे चतुर्थीसमासेन सिद्धः तदर्थशब्दः। समासविधानार्थं चतुर्थ्यन्तेन सह अर्थशब्दस्य सामर्थ्यम् अपेक्षते। परन्तु तदर्थं चतुर्थीविधायकशास्त्राभावात् सूत्रे **अर्थशब्देन** समासविधानं व्यर्थं स्यात्। अतः वार्तिककारेण **चतुर्थी सम्प्रदाने ( 2.3.13 )** इति सूत्रे **तादर्थ्यस्य उपसङ्ख्यानं** कृतम्। तेन कार्यकारणभावरूप-प्रयोजनसामान्ये गम्यमाने कार्यवाचकात् चतुर्थी भवति। उपसङ्ख्यानाभावे ज्ञापकात् चतुर्थीविभक्तिर्बोध्या।[3]

एवं सामान्येन उपकार्योपकारकभावरूपसम्बन्धे गम्यमाने उपकार्यवाचकात् चतुर्थी भवति। इदं च क्वचित् विशेषस्थले यथा- यूपाय दारु, कुण्डलाय हिरण्यम् इत्यादौ कार्यकारणभावं द्योतयति। तत्र हि यूपादि कार्यं, दार्वादि कारणं, तयोः कार्यकारणभावरूपः सम्बन्धः चतुर्थ्या द्योत्यते। अतः कार्यवाचकात् यूपादिशब्दात् चतुर्थी विहिता।

क्वचित् सामान्येन रन्धनाय स्थाली इत्यादौ उपकार्योपकारकभावं गमयति। स्थाली अत्र उपकारिका रन्धनं प्रति। अतः उपकार्यवाचकात् रन्धनशब्दात् चतुर्थी संगच्छते। एवमेव मुक्तये हरिं भजति इत्यत्रापि मुक्तिरूपोपकार्यस्य उपकारकं भवति

---

1. पदमञ्जरी- चतुर्थी सम्प्रदाने (2.3.13)
2. वालमनोरमा- चतुर्थी सम्प्रदाने (2.3.13)
3. यद्यपि समासः प्रकृतिविकृतिभावे एव तथापि तज्ज्ञाप्या चतुर्थी सर्वत्रेति भावः।- उद्योतः (चतुर्थी सम्प्रदाने- 2.3.13 तादर्थ्यस्य उपसंख्यानं न कर्तव्यमिति समाधानभाष्ये)

हरिकर्मकं भजनम्। किञ्च, विप्राय ओदनं, विप्राय दधि इत्यादिषु चतुर्थ्यन्तपदैः साक्षात् उपकार्योपकारकत्वस्य प्रतीत्यभावेऽपि परम्परया सः सम्बन्धः ग्राह्यः। अत्र यद्यपि विप्रकर्तृकभोजनं प्रति एव ओदनादीनाम् उपकारकत्वं तथा स सम्बन्धः परम्परया विप्रे आगच्छति। अतः तस्मात् चतुर्थी सङ्गच्छते।

अतः साक्षात् परम्परया वा ययोर्द्वयोर्मध्ये उपकार्योपकारकभावः गम्यते तत्र उपकार्यवाचकात् चतुर्थी भवति। एवमेव कारक-तदितरसम्बन्धेषु विधीयमानां चतुर्थीं विना इतरत्र या चतुर्थी दृश्यते सा उपकार्योपकारकभावसम्बन्धे इति ज्ञेयम्।

**समासे तादर्थ्यस्य विशिष्टार्थबोधकत्वम्**

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ( 2.1.36 )**- इति सूत्रमिदं चतुर्थ्यन्तस्य तत्प्रयोजकसुबन्तैः सह समासं शास्ति। परन्तु तादृशचतुर्थीविधायकशास्त्राभावे सूत्रे तदर्थग्रहणं व्यर्थं स्यात्। अतः वार्तिककृता- **चतुर्थीविधाने तादर्थस्य उपसङ्ख्यानम्** इति शास्त्रेण चतुर्थी विहिता। किञ्च भाष्यकारेणापि परं वार्तिकमिदं प्रत्याख्याय सूचितं यत् सूत्रे तदर्थग्रहणाद् एव ज्ञाप्यते यत् तादर्थ्ये चतुर्थी भवति इति।[1]

एवं तादर्थ्ये चतुर्थी विभक्तिः विहिता। ततश्च **चतुर्थी तदर्थार्थ**- इति सूत्रेण तादर्थ्ये विहितेन चतुर्थ्यन्तेन सह तत्सामर्थ्यविशिष्टस्य समासो विधीयते। विशेषस्तु समासे अयं यत्- तादर्थ्ये या चतुर्थी विहिता, तासु यत्र सम्बन्धिनोः प्रकृतिविकृतिभावः द्योत्यते तत्रैव तादर्थ्येन चतुर्थीसमासः। एवं च यत्र तादर्थ्येन चतुर्थीसमासो दृश्यते तत्र समस्तपदयोः प्रकृतिविकृतिभावः बोध्यः। अयं च विषयः **चतुर्थी तदर्थेति**- सूत्रभाष्यस्वरसगम्यः। तत्र हि भाष्ये **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** इति सूत्रे वार्तिकत्रयं वार्तिककृता स्वीकृतम्। तेषु **विकृतिः प्रकृत्येति वक्तव्या** इति प्रथमवार्तिकस्य खण्डनं तु एवं कृतं भाष्यकृता-

**"तद्वार्तिकं मास्तु। आचार्यप्रवृत्या एवैतत् ज्ञायते यत्- तदर्थेन समासस्तु केवलं प्रकृतिविकृतिभावविशिष्टस्य एव। यतो हि सूत्रे बलिहितसुखरक्षितानां ग्रहणं विहितम्। यदि सूत्रे तदर्थमात्रेण सामान्यस्यैव ग्रहणं स्यात् तर्हि बलिहितादीनां ग्रहणम् अनर्थकं स्यात् सामान्येन तेषां प्रयोगेऽपि चतुर्थीदर्शनात्, तेनैव च केवलं सूत्रे तदर्थशब्दमात्रेण बलिहितादीनां समाससम्भवात्। इदं तु अत्र अधिकतया**

---

1. तत्तर्हि उपसङ्ख्यानम् कर्तव्यम्। न कर्तव्यम्। आचार्यप्रवृत्तिर्ज्ञापयति- भवति तादर्थ्ये चतुर्थी इति। यदयं चतुर्थी तदर्थार्थ- इति चतुर्थ्यन्तस्य तदर्थेन सह समासं शास्ति ( भाष्यम्, चतुर्थी सम्प्रदाने- 2.3.13)

**गम्यते यत् चतुर्थीसमासो यत्र तादर्थ्यसामर्थ्येन विहितस्तत्र तदर्थेन प्रकृतिविकृतिभावसम्बन्ध एव ग्राह्यः।[1]"**

अयमाशयो यत्- चतुर्थी तदर्थेति सूत्रेण तादर्थ्यविहितचतुर्थ्यन्तेन तत्सामर्थ्यवत्सुबन्तस्य यः समासः विहितः तत्र तादर्थ्येन प्रकृतिविकृतिभावसम्बन्धवद् एव ग्रहणं, नान्यस्य। ननु अश्वाय घासः इति विग्रहे अश्वघासादीनां चतुर्थीसमासः कथं, तत्र तादर्थ्येन अश्वघासयोः प्रकृतिविकृतिभावस्य अनवगमात्। अत्र भाष्यकारेण तयोः चतुर्थीसमासो नाङ्गीकृतः, अश्वस्य घासः इति सम्बन्धसामान्येन षष्ठीसमास एव[2]। अतः स्फुटमिदमवभासते यत्- प्रकृतिविकृतिभावरूपार्थः तदर्थान्तःपाती। समासे आद्यस्यावगतिः, तद्रहिते वाक्ये उपकार्योपकारकभावरूपः प्रयोजनमात्रम् एव अर्थः।

**तादर्थ्ये क्रियासंसर्गः**

क्रियानिष्पत्तिर्हि प्रयोजननिष्ठा। अतः तादर्थ्यं यत्र गम्यते तत्र तत्प्रयोजिका क्रिया तु अवश्यं स्यात्। सा क्रिया वाक्येषु क्वचित् शब्दतः एव स्फुटं भासते, क्वचित् क्रियावाचकराहित्येन अर्थतो गम्यते। तद्यथा-**परित्राणाय साधूनां सम्भवामि युगे युगे।** अत्र परित्राणं हि प्रयोजनम्, तत्प्रयोजिका क्रिया-सम्भवः। क्रिया तु अत्र शब्दतः एव अवगम्यते। एवं- **रन्धनाय स्थाली, यूपाय दारुः**- इत्यादिषु यत् तादर्थ्यं सुबन्तयोः भासते तदपि आनयनादिक्रियानिष्ठमेव। विशेषो हि अत्र सा क्रिया अर्थतः भासते न तु शब्दतः। अतः क्रियावाचकं विनापि वाक्यार्थबोधे यत् तादर्थ्यं भासते तत् अध्याहृत-क्रियाश्रितम् एव। यूपदारुः, कुण्डलहिरण्यम् इत्यादौ समासे तु विनैव क्रियां प्रकृतिविकृतिभावरूपं तादर्थ्यं यद्भासते तत् समासविधानवशात्।

अन्यच्च **क्रियार्थोपपदस्य च कर्मणि स्थानिनः (2.3.14) तथा तुमर्थाच्च भाववचनात् (2.3.15)**- इति आभ्यां सूत्राभ्यां या चतुर्थी विहिता तत्रापि चतुर्थ्या प्रयोजनम् एव अवभासते। तत्र फलेभ्यो याति- इत्युदाहरणवाक्यस्य अर्थव्यासस्तु एवम्- फलानि आहर्तुं याति इति। तत्र आहरणक्रियायाः कर्म फलम्। आहरणक्रिया हि प्रयोजिका यानक्रियायाः। प्रसङ्गे तस्याः प्रयोजकक्रियायाः अप्रयुज्यमानतया तन्निरूपितकर्मणि फले चतुर्थी विधीयते। अतः परम्परया यानक्रियायां फलस्य प्रयोजनत्वम्। एवं **तुमर्थाच्च भाववचनात** इति सूत्रेण तुमुन्प्रत्ययस्यार्थे विहितात् भावप्रत्ययान्तप्रातिपदिकात् चतुर्थी

---

1. महाभाष्यम्, चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (2.1.36)
2. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः इति सूत्रभाष्ये अश्वघासादीनामुपसङ्ख्यानं कर्तव्यमिति वार्तिकखण्डनावसरे।

भवति। तुमुन्प्रत्यय: धातो: क्रियायार्थायां क्रियायामुपपदे विधीयते। एवं तुमुन: प्रयोजनरूप: अर्थस्तु सिद्ध: एव। तस्मिन्नेवार्थे गम्यमाने **भाववचनाश्च (3.3.11)** इति सूत्रेण घञ्-अच्-अप्- क्तिनित्यादयो: भावप्रत्यया: विधीयन्ते। तादृशतुमर्थविहितभाव-प्रत्ययान्तप्रातिपदिकात् चतुर्थी भवति। अत: यागाय व्रजति, पाकाय याति, आत्मशुद्धये कर्म कुर्वन्ति- इत्यादिषु अपि चतुर्थ्या: प्रयोजनरूपार्थ: स्फुट: एव।

**उपसंहृति:**

संस्कृतवाङ्मये विहाय कारकचतुर्थी तादर्थ्यचतुर्थीप्रयोगश्चतुर्थ्यन्तप्रयोगेषु बाहुल्येन दृश्यते। कारकचतुर्थी सम्प्रदानत्वशक्तिमती। तादर्थ्यचतुर्थ्या: शक्तिविषये विद्यते सङ्कर:। तत्र तत्र सन्दर्भेषु दृष्टं- क्वचित् तादर्थ्यचतुर्थ्या प्रयोजनम् अवगम्यते, क्वचित् समासे तादर्थ्येन प्रकृतिविकृतिभावरूप: सम्बन्धमात्रं गम्यते। एवम् अस्त्यत्र साङ्कर्यम्। यद्यपि तादर्थ्यस्य उपकार्योपकारकभावरूप: सम्बन्ध: निरूपित:, तथापि स सम्बन्ध: प्रयोगवशात् वाक्ये समासे च भिन्नं सम्बन्धं स्वीकरोति। अन्यथा समासेन विशिष्टसम्बन्धभाणं न स्यात्। किञ्च तादर्थ्यमात्रे विहितस्य सर्वस्य समासप्रसक्तिर्वा स्यात्। अत: सम्बन्धभेदस्तु नियत एव। तत्र समासे विशिष्य प्रकृतिविकृतिभावरूप: सम्बन्ध: गम्यते। अन्यथा प्रयोजनरूपार्थ: सर्वत्र स्वाभाविक एवेत्यलं पल्लवितेन॥

**परिशीलितग्रन्थसूची**

1. पाणिनि:। 2011। अष्टाध्यायी। पाण्डेय: गोपालदत्त: (सम्पा०)। वाराणसी : चौखम्बासुरभारतीप्रकाशन।
2. भट्टोजिदीक्षित:। 2010। वैयाकरणसिद्धान्तकौमुदी (बालमनोरमातत्त्वबोधिनीसहिता)। शर्मा, परमेश्वरानन्द: (सम्पा०)। वाराणसी : मोतिलाल बनारसीदास।
3. कौण्डभट्ट:। 2006। वैयाकरणभूषणसार: (प्रभादर्पणव्याख्याद्वयोपेत:)। पञ्चोलीक्र बालकृष्ण: (सम्पा०)। वाराणसी : चौखम्बा संस्कृत संस्थान।
4. पतञ्जलि:। 2013। व्याकरणमहाभाष्यम् (प्रदीपोद्योतभावबोधिनीहिन्दीव्, जयशङ्करलाल: (सम्पा०)। वाराणसी : कृष्णदास अकादेमी।
5. भर्तृहरि:। 2015। वाक्यपदीयम्। मिश्र:, सुधाकर: (सम्पा०)। कलकाता : बनारस मार्केन्टाइल कम्पनी।
6. वामनजयादित्यौ। काशिका (प्रथमभाग:)। वाराणसी : चौखम्बासुरभारतीप्रकाशन।

7. हरदत्तमिश्रः। 1981। पदमञ्जरी (प्रथमभागः)। पुल्लेलश्रीरामचन्द्रुडु, विठलदेवुनिसुरन्दर शर्मा (सम्पादकौ)। हैदराबाद् : उस्मानियाविश्वविद्यालयः।

8. नागेशभट्टः। लघुशब्देन्दुशेखरः (कारकप्रकरणम्)। हरेकृष्णशतपथी (सम्पा०)। तिरुपतिः : राष्ट्रियसंस्कृतविद्यापीठ।

9. जिनेन्द्रबुद्धिः। 1985। न्यासापराख्या काशिकाविवरणपञ्जिका (प्रथमभागः)। पुल्लेलश्रीरामचन्द्रुडु, विठलदेवुनिसुरन्दर शर्मा (सम्पादकौ)। हैदराबाद् : उस्मानियाविश्वविद्यालयः।




# आत्मसाक्षात्कारे श्रवणमनननिदिध्यासनानां कारणत्वविचारः

चन्दनमुखर्जी *

## 1. प्रस्तावना

भारतीयास्तिकदर्शनपरम्परायां गगनसदृशं महदस्ति वेदान्तदर्शनम्। वेदानामन्तो वेदान्तः। अन्तशब्दस्यार्थः अन्तिमो भागः सिद्धान्तो वा। अर्थाद्वेदानामन्तिमभागः सिद्धान्तो वा वेदान्तः। वेदान्तो नाम वेदैः निर्णीतोऽर्थः। पारमार्थिकानां तत्त्वानां प्रतिस्थापको वेदान्तः। उक्तं च वेदान्तलक्षणं वेदान्तसारे- 'वेदान्तो नामोपनिषत्प्रमाणम्'[1] इति। जीवब्रह्मणोरभेदबोधकं वाक्यं वेदान्तः। यथा तिलेषु तैलमेव उपादेयं, तथा वेदेषूपनिषद्वेदान्तो वा उपादेयः। उच्यते मुक्तिकोपनिषदि-

**निःश्वासभूता मे विष्णोर्वेदा जाता सुविस्ताराः।**
**तिलेषु तैलवद्वेदे वेदान्तः सुप्रतिष्ठितः॥**[2] इति

सत्यं नित्यं शुद्धमानन्दं मुक्तं बुद्धं परमस्थूलमनणु अशब्दम् अस्पर्शम् अरूपम् अव्ययं ब्रह्म केवलं वस्तुत्वेन स्वीकृतम् अद्वैतवेदान्ते। तद्विहायान्यत्सर्वं प्रपञ्चजातं जगद्रूपं मिथ्याभूतम्। जीवः परमात्मस्वरूपः, परन्तु मिथ्याज्ञाननिमित्तः स्वरूपाद्भिन्नः। ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः इत्येवं मूलम् अद्वैतवेदान्तस्य। तथाभूतस्याद्वैत-सिद्धस्य परमवस्तुनः प्रत्यक्चैतन्यस्यात्मनः स्वरूपावबोधः एव आत्मसाक्षात्कारो मोक्षो वा। 'प्रयोजनं तु तदैक्यप्रमेयगताज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च'[3] इति वचनादज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्चेति द्विविधं प्रयोजनं ज्ञायते। आत्मसाक्षात्कार-

---

* रिसर्च स्कॉलर, संस्कृत एवं साहित्य विभाग, रामकृष्ण मिशन विवेकानन्द शिक्षा एवं रिसर्च इन्स्टीट्यूट, पश्चिम बंगाल, पिन-711202

1. वेदान्तसारः (प्रथमं वाक्यम्)
2. मुक्तिकोपनिषत्- 9
3. वेदान्तसारः (प्रयोजननिरूपणम्)

जन्यमोक्षमार्गे यानि सोपानानि वर्तन्ते, तेषाम् अद्वैतसिद्धान्ते समन्वयः कथं स्यात्तदर्थम् अयं लेखः प्रस्तूयते।

## 2. आत्मसाक्षात्कारे प्रश्नाः

आत्मसाक्षात्कारो नाम मोक्षः। आत्मसाक्षात्कारः इति श्रवणमात्रेण केचन प्रश्नाः उत्पद्यन्ते। आत्मा कः, कथम् आत्मसाक्षात्कारः कर्तव्यः, आत्मनः साक्षात्करणार्थं मार्गाः सोपानानि वा कति, आत्मसाक्षात्कारस्य फलं किम्, एवञ्च आत्मसाक्षात्कारः वेदान्तादिशास्त्रेषु कथम् उपन्यस्तः चेति। सामान्यरूपेण तेषां प्रश्नानां समाधानाय यथामति प्रयासः विधीयतेऽस्मिन् लेखे।

## 3. आत्मसाक्षात्कारः

आत्मना सहैकीभवनमेवात्मसाक्षात्कारो मोक्षो वा। आनन्दात्मकस्य ब्रह्मणः प्राप्तिः एव मोक्षः। वैषयिकानन्दः मोक्षः भवितुं नार्हति। वैषयिकानन्दः अनित्यः। मोक्षः ज्ञानैकसाध्यः। सत्यस्वरूपावबोधः ज्ञानस्वरूपावबोधः अनन्तस्वरूपावबोधः चैव मोक्षशब्दवाच्यः। जननमरणादिलक्षणरूपात् संसारचक्रात् मुक्तिरेव मोक्षः। अद्वैतवेदान्तसिद्धान्ते मोक्षः न कोऽपि नव्यविषयः। यथा गाढान्धकारेण रज्ज्वौ सर्पभ्रमो भवति, पुनः अन्धकारापगमे यथावत् रज्जुः प्रतिभासते। अत्र रज्जुः नवीनः कश्चित् पदार्थः इति वक्तुं यथा न शक्यते। तद्वत् जीवः परमात्मना सहाभिन्नः एव। केवलमज्ञानात् स्वस्वरूपाद् ब्रह्मरूपाद्भिन्नः। पुनः ज्ञानोदये जीवस्य स्वरूपावबोधः एव मोक्षः। अर्थात् मोक्षः नवीनः कश्चित् पदार्थः इति वक्तुं न शक्यते। अज्ञाननाशे सति ज्ञानोदयः तदैव मुक्तिः। तस्मात् ज्ञानादेव मोक्षः, न तु कर्मणा। उच्यते च- "ज्ञानादेव तु कैवल्यम्" इति। मुण्डके श्रूयते- "ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः"[1] इति। अधुनात्मसाक्षात्कारे साधनानि कानि तान्यत्र विशेषेण द्रष्टव्यानि।

## 4. आत्मसाक्षात्कारसाधनप्रक्रिया

वेदान्तव्याख्यानपरम्परायां साक्षाच्छ्रवणमनननिदिध्यासनानां व्याख्यानात्पूर्वं मोक्षप्राप्तये यत्नः कथं विधेयस्तद्विषयेऽत्रोच्यते। आदौ मोक्षप्राप्तये अधिकारी कः इति निर्णेतव्यः। शमदमोपरतितितिक्षासमाधानश्रद्धासम्पत्तिविशिष्टः जीवोऽधिकारी। तेनाधिकारिणा प्रमात्रा निष्कामतया ईश्वरार्पणबुद्ध्या नित्यनैमित्तिकं कर्म क्रियते चेत्तस्य अन्तःकरणं शुद्धतामाप्नोति। तेनैव शुद्धान्तःकरणेन हि आत्मदर्शनम्। पुनः अनेन शुद्धान्तःकरणविशिष्टप्रमात्रा नितरां

1. मुण्डकोपनिषत् (3.1.28)

श्रवणं मननं निदिध्यासनं च अभ्यसनीयम्। अर्थादधिकारिणा प्रमात्रा प्रशान्तचित्तेन गुरूपासनविधिना नैत्यनैमित्तिककर्मसम्पादनेन श्रवणमनननिदिध्यासन– मार्गेण ब्रह्मसाक्षात्कारः कर्तव्यः। श्रवणमनननिदिध्यासनेन संस्कृतम् अन्तःकरणमेव ब्रह्मसाक्षात्कारे करणम्। तथा च शङ्कराचार्यवचनं– "शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करणम्" इति।

### 5. श्रवणं मननं निदिध्यासनञ्च

एतावता श्रवणमनननिदिध्यासनानां शब्दपरिचयस्तु जातः एव। अधुना तेषां स्वरूपम्, उपेयेन सह उपायत्वप्रदर्शनं, युक्तिपूर्वकं विधिविचारपर्यालोचनम्, एवम् आत्मसाक्षात्कारे कारणत्वविवेचनं, तेषामुपयोगः, भामतीविवरणादि प्रतिसम्प्रदायं विस्तृतं विश्लेषणमग्रे प्रस्तूयते।

### 5.1. श्रवणादिविधिवाक्यम्–

बृहदारण्यकोपनिषदो मैत्रेयीब्राह्मणे याज्ञवल्क्येन आदौ आत्मदर्शनम् उपदिष्टम्– 'आत्मा वा अरे द्रष्टव्यः'[1] इति। ततः तत्साधनत्वेन 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[2] च इति विधानं कृतम्। ततः फलमपि प्रोक्तं– "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्"[3] इति। अर्थात् दर्शनेन श्रवणेन मननेन विज्ञानेन च सर्वोपप्लवरहितं ब्रह्म ज्ञेयम्। पुनः द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः चेत्यत्र तव्यप्रत्ययश्रवणात् अत्र विधिस्तु अस्त्येवेति ज्ञायते। अधुना तेषां स्वरूपविवेचनात् प्राग् प्रतिपाद्यमानः उपेयोपायसम्बन्धः वर्ण्यते।

### 5.2. उपेयोपायसम्बन्धः–

नास्ति उपायमन्तरेण उपेयसिद्धिः इति वचनेन उपेयसिद्धेः प्राग् उपायाः ज्ञातव्याः। उपेयोपायज्ञानाभ्यां कस्यचिदपि तत्त्वस्य सम्यग्गवधारणं सम्भवति। उपेयं नाम मूलं साध्यं लक्ष्यं फलं वा। उपायस्तु साधनम्। उपेयं ब्रह्म। उपायस्तु ब्रह्मप्राप्तये साधनानि यथा श्रवणमनननिदिध्यासनादीनि। पारमार्थिकदृष्ट्या सर्वं व्यवहारिकं मिथ्याभूतम्। ब्रह्मोपलब्ध्यनन्तरम् इमानि श्रवणादीनि अपि निरस्तानि भवेयुः। तस्मात् उपायस्य मिथ्यात्वे सत्यपि उपेयसत्यत्वेन सत्यत्वमेव आपद्येत। विद्यां प्रति कर्माणि उपायभूतानि।

1. बृहदारण्यकोपनिषत् (2.4.5)
2. बृहदारण्यकोपनिषत् (2.4.5)
3. बृहदारण्यकोपनिषत् (2.4.5)

तस्मात् उपाये एव यत्नः अधिकः आचरणीयः, न तु उपेये प्रधाने। उपायाः निष्ठया साध्यन्ते चेत् उपेयसिद्धिरपि सुतरां भवेत्। अतः आदावेव उपायानां श्रवणमनननिदिध्यासनानां विस्तृतं वर्णनं प्रदर्श्यते–

### 5.3. श्रवणम्–

आत्मसाक्षात्कारे प्रथमं सोपानं वर्तते श्रवणम् इति। श्रवणम् अर्थात् मानसी क्रिया। कथं सा क्रिया सम्पाद्यते इति चेत् वेदान्तानाम् अद्वितीये वस्तुनि तात्पर्यावधारणेन। श्रवणं नाम न केवलं कर्णाभ्यां वेदान्तवाक्यानां श्रवणम्, अपि तु श्रवणेन वेदान्तवाक्यानाम् अखण्डाद्वैते ब्रह्मणि तेषां निश्चयसाधनं तात्पर्यावधारणं वा। वेदान्तपरिभाषायाम् उक्तं– 'श्रवणं नाम वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया'[1] इति। कथं तानि उपनिषद्वाक्यानि ब्रह्मणि समन्वयानि इति चेत् तत्र षड्विधानि तात्पर्यलिङ्गानि आश्रीयन्ते। उक्तं च बृहस्पतिसंहितायाम्–

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।** इति

अर्थात् उपक्रमोपसंहारौ अभ्यासः अपूर्वता फलम् अर्थवादः उपपत्तिः चेति षड् प्रदर्शिताः। उच्यते वेदान्तसारे– 'श्रवणं नाम षड्विधलिङ्गैः अशेषवेदान्तानाम् अद्वितीयवस्तुनि तात्पर्यावधारणम्'[2] इति। पद्मपादाचार्यास्तु– "तथा च श्रवणं नाम आत्मावगतये वेदान्तवाक्यविचारः, शारीरकश्रवणं च"[3] इति श्रवणप्रक्रियां व्याख्याति। कथं षड्विधलिङ्गैः अशेषवेदान्तानां तात्पर्यावधारणं क्रियते तदत्र प्रस्तूयते।

#### 5.3.1. षड्विधलिङ्गैः वेदान्तानां तात्पर्यावधारणप्रक्रिया

साधारणतया तात्पर्यशब्दस्य अर्थः अभिप्रायः इति वक्तुं शक्यते। तत् अर्थः, सः परः यस्य स तत्परः इति बहुव्रीहिसमासः। तत्परः नाम अर्थपरः इत्यर्थः। तत्परस्य भावः तात्पर्यम् इति भावे 'यञ्प्रत्ययेन तात्पर्यशब्दः व्युत्पन्नः। शब्दः वाक्यं वा यदर्थपरं नाम यस्मिन् अर्थे समागतं, तत्प्रतीतिजननयोग्यत्वम् तात्पर्यम् इति तात्पर्यशब्दव्युत्पत्तिः।

तात्पर्यलिङ्गम् इति शब्दश्रवणेन तात्पर्यं लिङ्गं चेति शब्दद्वयं कर्णगोचरम् आयाति। तात्पर्यं किं तत् पूर्वमेव ज्ञातम्। अधुना लिङ्गमुच्यते लीनम् अर्थं गमयति इति लिङ्गम्। अर्थात् व्याप्तिवशात् यत् यस्य गमकं तत् तस्य लिङ्गम् इति। तात्पर्यनिर्णयाय

1. वेदान्तपरिभाषा
2. वेदान्तसारः
3. पञ्चपादिका नवमं वर्णकम्

लिङ्गम् तात्पर्यलिङ्गम् इति कृत्वा प्रकृतशब्दस्य व्युत्पत्तिः।

अर्थात् उपनिषद्भूतानाम् अशेषवेदान्तवाक्यानाम् अद्वितीये वस्तुनि ब्रह्मणि तात्पर्यावधारणाय प्रयुक्तानि लिङ्गानि एव तात्पर्यलिङ्गानि इति फलितार्थः। एतानि तात्पर्यलिङ्गानि व्याप्तिबलेन ब्रह्मणः गमकानि, तस्मात् एतानि वाक्यानि उपनिषत्प्रतिपाद्य-ब्रह्मणः लिङ्गानि। एतैः तात्पर्यलिङ्गैः एव गुरूपदिष्टवेदान्तवाक्यं जीवब्रह्मैक्यतात्पर्यं गमयति। तस्मात् एव अशेषवेदान्तवाक्यानां ब्रह्मणि एव तात्पर्यम्। सर्वाणि च उपनिषद्वाक्यानि ब्रह्मणि एव पर्यवसितानि।

प्रथमं तात्पर्यग्राहकं लिङ्गम् उपक्रमोपसंहारौ। उपक्रमः आरम्भः, उपसंहारः परिसमाप्तिः। उपक्रमे प्रतिपाद्यस्य विषयस्य उपपादनं तिष्ठति। उपसंहारे च प्रतिपादितविषयस्य उपपादनं वर्ण्यते। एवम् उपक्रमोपसंहाराभ्यां प्रकरणस्य तात्पर्यावधारणम्। यथा बृहदारण्यकोपनिषदि परमात्मप्रकरणे 'आत्मेत्येवोपासीतात्र ह्येते सर्वम् एकं भवन्ति'[1] इत्यनेन परमात्मनः उपपादनात् उपक्रमः। पुनः अन्तिमे पूर्णमदः इत्यनेन प्रतिपादितस्य विषयस्य ब्रह्मणः उपपादनात् उपसंहारः।

द्वितीयं तात्पर्यग्राहकं लिङ्गं भवति अभ्यासः। अभ्यासः नाम असकृत् आवृत्तिः। उपक्रमोपसंहाराभ्यां प्रतिपाद्यस्य वस्तुनः पुनः पुनः प्रतिपादनम् अभ्यासः। यथा बृहदारण्यकोपनिषदि निर्विशेषस्य परमात्मनः व्यतिरिक्तं किमपि नास्ति इति बहुवारं श्रूयते 'नेति नेति'[2] इति द्वारेण। एवम् उपक्रमाद्युपसंहारपर्यन्तं निषेधमुखेन परमात्मनः पौनःपुन्येन प्रतिपादनम् अभ्यासः।

तृतीयं तात्पर्यग्राहकं लिङ्गम् अपूर्वता। उपक्रमोपसंहाराभ्यासैः ब्रह्मोपदेशे जाते ब्रह्मविषयकः संशयः जायते। तदा संशयस्य नाशः अपूर्वेणैव क्रियते। सन्देहनिराकरणे हेतुः अपूर्वता। यथा बृहदारण्यकोपनिषदि- 'तन्त्वौपनिषदं पुरुषं पृच्छामि'[3] इत्यादिश्रुत्या उपनिषन्मात्रवेद्यत्वस्य ब्रह्मणः प्रतिपादनात् ब्रह्मणः अपूर्वत्वम्। अपूर्वत्वेनैव ब्रह्मणि तात्पर्यम्।

चतुर्थं तात्पर्यग्राहकं लिङ्गं तावत् फलम्। उपक्रमोपसंहाराभ्यां प्रतिपाद्यस्य, अभ्यासेन चर्चितस्य, अपूर्वेण प्रमाणान्तराविषयस्य च वस्तुनः प्रयोजनं किमिति जिज्ञासा समुदेति। तदा प्रयोजनमाध्यमेन तात्पर्यम् अवगमयितुं वेदान्तसारकृतोच्यते- 'फलं तु प्रकरणप्रतिपाद्यस्य आत्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनम्' इति। आत्मविज्ञानप्रकरणे

1. बृहदारण्यकम् (1.4.3)
2. बृहदारण्यकोपनिषत् (2.3.6), (3.9.26), (4.4.22), (4.5.15), (4.5.3)
3. बृहदारण्यकोपनिषत् (3.9.26)

आत्मज्ञानस्य यत् प्रयोजनं श्रुयते तदेव फलम्। तेनैव तात्पर्यसिद्धिः। तत्रैव बृहदारण्य-कोपनिषदि प्रतिब्राह्मणं प्रकरणप्रतिपाद्यस्य परमब्रह्मणः प्रयोजनं श्रूयते। यथा 'अभयं वै जनक प्राप्तोऽसि'[1] इति, "ब्रह्मैव सन्ब्रह्माप्येति"[2] इति। तस्मात् फलेन उपनिषद्वाक्यानां तात्पर्यावधारणम्।

पञ्चमं तात्पर्यग्राहकं लिङ्गं तावत् अर्थवादः। उच्यते वेदान्तसारे 'प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनम् अर्थवादः' इति। अर्थात् विधिना प्रदर्शिते अर्थे सन्देहः स्याच्चेत् तत्र वाक्यशेषेण अर्थवादेन वा अर्थनिर्णयः कर्तव्यः। एवम् विधिवाक्यानां तात्पर्यं निर्णेतुम् अर्थवादलिङ्गस्य विद्यते महती भूमिका। यथा बृहदारण्यकोपनिषदि परमात्मप्रकरणे-'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्'[3] इति वाक्यम् अर्थवादपरम्। अर्थात् यः यथोक्तविधिना आत्मानं प्रतिबुद्धवान्, सः प्रतिबुद्धः आत्मा तत् ब्रह्म अभवत् इति प्रशंसा।

अन्तिमं तात्पर्यग्राहकं लिङ्गं तु उपपत्तिः। नानाविधैः दृष्टान्तैः उपक्रान्तस्य अर्थस्य व्यवस्थापनमेव उपपत्तिः। प्रोक्तं वेदान्तसारे- 'प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिः उपपत्तिः' इति। अर्थात् उपपत्तिः नाम युक्तिः। बृहदारण्यके- 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः'[4] इति उपपत्तिवाक्यम्। परमात्मप्रकरणे अस्मिन् ब्रह्मसिद्धये युक्तिः प्रदर्श्यते। तस्मात् परमात्मसिद्ध्यर्थम् इयं श्रूयमाणा युक्तिः उपपत्तिः। तयैव परमात्मतात्पर्यनिर्धारणम्। एवं तत्त्वमसि, अयमात्मा ब्रह्म, प्रज्ञानं ब्रह्म, अहं ब्रह्मास्मि चेत्यादिवाक्यैः ब्रह्मपर्यालोचनेन तेषां वाक्यानां तात्पर्यम् अवगम्यते। निगदितं च पञ्चदश्यां-'इत्थं वाक्यैः तदर्थानुसन्धानं श्रवणं भवेत्'[5] इति।

### 5.4. मननम्

आत्मसाक्षात्कारसाधनप्रक्रियायां द्वितीयं सोपानं वर्तते मननम् इति। मननं नाम मानसिकव्यापारः। श्रवणमाध्यमेन यः वेदान्तार्थः निश्चितः तस्य अनुशीलनप्रक्रियायां बहवः आक्षेपाः भवितुम् अर्हन्ति। आक्षेपादिना वेदान्तसिद्धान्ते भ्रमाः उत्पद्यन्ते। किञ्च स्वमनसि एव विरुद्धानि मतानि उपजायन्ते। तस्मात् श्रवणात् परं मननम् अवश्यमेव

1. बृहदारण्यकोपनिषत् (4.2.4)
2. बृहदारण्यकोपनिषत् (4.4.6)
3. बृहदारण्यकोपनिषत् (1.4.10)
4. बृहदारण्यकोपनिषत् (2.4.7)
5. पञ्चदशी (1.53)

कर्तव्यम्। यथार्थं भणितं धर्मराजाध्वरीन्द्रेण वेदान्तपरिभाषावाक्यं तावत्– 'मननं नाम शब्दावधारिते अर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मकज्ञानजनको मानसो व्यापार:'[1] इति। मननं तु तर्कात्मकम् इति फलितम्। किंरूप: स: तर्क: इति चेत् वेदसिद्धान्ताविरोधी तर्क:। उच्यते तावत् मननलक्षणम् वेदान्तसारे– 'मननं तु श्रुतस्य अद्वितीयवस्तुन: वेदान्तानुगुणयुक्तिभि: अनवरतम् अनुचिन्तनम्'[2] इति। अर्थात् श्रुतानां वेदान्तवाक्यानां वेदान्तानुकूलाभि: युक्तिभि: अविच्छिन्नं चिन्तनं मननम्। येन आक्षेपा: विरोधा: स्थातुमेव असमर्था: तिष्ठन्ति। एवं युक्त्या सम्भावितस्य श्रुतार्थस्य उपपद्यमानत्वज्ञानं मननम्। 'युक्त्या सम्भावितत्त्वानुसन्धानं मननं तु तत्'[3] इति पञ्चदशीमतम्। तस्मात् वेदान्तवाक्यानां श्रवणात् परम्, अद्वैते ब्रह्मणि वेदान्तानां तात्पर्यावधारणात् परं, विरुद्धानां विप्रतिपत्तीनां वेदसिद्धान्तानुगुणयुक्तिभि: निराकरणं मननम्। वाचस्पतिमिश्रस्तु– 'शब्दा-विरोधिन्या तदुपजीविन्या च युक्त्या विवेचनं मननम्'[4] इति प्रतिपादयति। पद्मपादाचार्यस्य वचनं तु "मननं वस्तुनिष्ठवाक्यापेक्षितदुन्दुभ्यादिदृष्टान्तजन्मस्थितिलयवाचारम्भणत्वादि-युक्तार्थवादानुसन्धानं, वाक्यार्थाविरोध्यनुमानानुसन्धानं च"[5] इति।

### 5.5. निदिध्यासनम्

श्रवणमननाभ्यां परम् आत्मसाक्षात्कारे तृतीयं सोपानं भवति निदिध्यासनम् इति। किं नाम निदिध्यासनम् उच्यते वेदान्तपरिभाषायां– 'निदिध्यासनं नाम अनादिदुर्वसनया विषयेषु आकृष्यमाणचित्तस्य विषयेभ्य: अपकृष्य आत्मविषयकस्थैर्यानुकूलो मानसो व्यापार:'[6] इति। श्रवणेन वेदान्तवाक्यानाम् अद्वितीये ब्रह्मणि तात्पर्यम् अवगम्यते। तेन प्रमाणगता असम्भावना अपगम्यते। पुन: मननेन प्रमेयगता असम्भवना अपाक्रियते। तथापि अनादिकालत: काचित् दुर्वासना अस्मन्मनसि तिष्ठति एव। एवं वेदान्तोपदिष्ट: देहादिव्यतिरिक्त: आत्मा दुर्वासनया न स्फुरति। तस्मात् अहं देह: इति विजातीयप्रत्ययं त्यक्त्वा अहमात्मा इति अद्वितीयसजातीयवस्तुप्रवाह: एव निदिध्यासनम्। विषयेषु आकृष्यमाणं चित्तं सजातीयाद्वैतज्ञानप्रवाहेण अपकृष्यते। एवञ्च आत्मविषयिणी स्थिरता उत्पद्यते, तदेव निदिध्यासनम्। निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात् कारणं भवति इति

---

1. वेदान्तपरिभाषा
2. वेदान्तसार:
3. पञ्चदशी (1.53)
4. भामती (1.1.2)
5. पञ्चपादिका नवमे वर्णके
6. वेदान्तपरिभाषा (पृष्टसंख्या– 391)

केचन आचार्याः मन्यन्ते। वेदान्तसारे तु– 'विजातीयदेहादिप्रत्ययरहित–अद्वितीयवस्तु–सजातीयप्रत्ययप्रवाहः निदिध्यासनम्'[1] इति। श्रवणमननाभ्यां संशयरहिते अर्थे स्थापितस्य चित्तस्य एकतानत्वं निदिध्यासनम्। तथा च पञ्चपादिकावचनम्– "निदिध्यासनं मननोपबृंहितवाक्यार्थविषये स्थिरीभावः, विधेयस्योपासनापर्यायस्य निष्फलत्वात्"[2] इति।

### 6. श्रवणादीनाम् अन्तरङ्गसाधनत्वम्–

तर्हि मोक्षप्राप्तये साधनानि कानि इति चेत्– ब्रह्मप्राप्तये द्विविधं साधनं दृश्यते– अन्तरङ्गसाधनं बहिरङ्गसाधनं च। येषां अनुष्ठानेन साक्षात् ज्ञानोत्पत्तिफलं दृश्यते तत् अन्तरङ्गसाधनम्। अन्तरङ्गसाधनानां ब्रह्मप्राप्तये साक्षादुपयोगः।

नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमादिषट्कसम्पत्तिः, मुमुक्षुत्वं, श्रवणं, मननं, निदिध्यासनं, तत्त्वमसीति तत्त्वंपदार्थशोधनं च इति अष्टौ अन्तरङ्गसाधनानि। अर्थात् श्रवणमनननिदिध्यासनानि अन्तरङ्गसाधनानि। कथम् इमानि अन्तरङ्गसाधनानि उच्यन्ते इति चेत्– विवेकादिचतुष्टयानां श्रवणादौ उपयोगः। पुनः श्रवणादीनां ज्ञानोत्पत्तये उपयोगः। यद्यपि श्रवणादीनां साक्षात् ज्ञानोत्पत्तये साधनत्वं नास्ति। तथापि वेदतात्पर्यग्राहकत्वेन अभेदब्रह्मप्रतिपादकत्वेन वा तेषाम् अन्तरङ्गतया साधनत्वं सिध्यति। तस्मात् श्रवणादीनाम् अन्तरङ्गसाधनत्वं सिध्यति। उच्यते तावत् वेदान्तपरिभाषायां– "एवं श्रवणमनननिदिध्यासान्यपि ज्ञानसाधनानि"[3] इति। किञ्चेतोऽप्युच्यते– "एतानि तावत् ब्रह्मप्राप्तये अन्तरङ्गसाधनानि। एतत्साधनानुष्ठानपूर्वकत्वात् एव फलप्राप्तिः" इति। एवं मुमुक्षुणा अवश्यं सर्वदैव श्रवणादयः आदरणीयाः।

पुनः येषाम् अनुष्ठानेन साक्षात् ज्ञानोत्पत्तिरूपं फलं तु न दृश्यते, परन्तु येषां नित्यकरणेन चित्तशुद्धिर्जायते तानि बहिरङ्गसाधनानि। अन्तःकरणशोधकत्वात् इमानि बहिरङ्गसाधनानि। यथा– यागयज्ञादयः।

### 8. आत्मसाक्षात्कारे श्रवणमनननिदिध्यासनानां कारणत्वविचारः।।

श्रवणमननाभ्यां निश्चिते निर्दिष्टे निःसन्दिग्धे वार्थे वस्तुनि वा मनसः एकतानत्वभावेन अवस्थानम् एव आत्मसाक्षात्कारः। तस्मात् श्रवणं मननं निदिध्यासनं च ब्रह्मसाक्षात्कारं प्रति कारणानि भवन्ति। उच्यते सम्प्रदायप्रसिद्धं वाक्यम्–

---

1. वेदान्तसारः
2. पञ्चपादिका नवमे वर्णके
3. वेदान्तपरिभाषा (प्रयोजनपरिच्छेदे)

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।**
**मत्वा च सततं ध्येयम् एते दर्शनहेतवः॥** इति।

अर्थात् श्रवणं मननं निदिध्यासनं चेति आत्मदर्शनहेतुभूतानि। परन्तु सम्प्रदायेषु नैकानि मतानि तु दरीदृश्यन्ते एव।

### 8.1. निदिध्यासनप्रधानाः भामत्यनुयायिनः-

अत्र आत्मसाक्षात्कारे त्रीणि कारणानि यद्यपि भवन्ति परन्तु त्रिषु कारणेषु ब्रह्मसाक्षात्कारे साक्षात्कारणं भवति निदिध्यासनम् इति भामतीकाराणां वाचस्पतिमिश्राणां मतम्। 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्'[1] इति श्रुतिरपि निदिध्यासनं समर्थयति। मननेन अद्वितीयस्य अर्थस्य दाढर्यता सम्पाद्यते। तेन विना निदिध्यासनं कदापि न सम्भवेत्। तस्मात् निदिध्यासनं प्रति कारणं मननम्। पुनः यावता श्रवणं न भवति तावता अद्वितीयब्रह्मणि वेदान्तवाक्यानां तात्पर्यं नावबुध्यते। तस्मात् मननं प्रति श्रवणं कारणम्। एवं निदिध्यासनेन फलसिद्धिः। अतः निदिध्यासनम् अङ्गि। श्रवणमनने तु तस्य अङ्गभूते। एवं त्रीण्यपि कारणानि भवन्ति। परन्तु ब्रह्मसाक्षात्कारे निदिध्यासनस्य प्रधानत्वम् इति वाचस्पतिमिश्रमतम्।

### 8.2. श्रवणप्रधानाः विवरणानुयायिनः-

त्रिषु कारणेषु श्रवणम् एव प्रधानकारणम् इति विवरणकाराः प्रकाशात्मयतयः। श्रवणम् एव प्रधानकारणम्। मननं निदिध्यासनं च तु सहकारिकारणे। श्रवणं सन्निपत्त्योपकारकतया अङ्गिभूतम्। मनननिदिध्यासने आरादुपकारकतया अङ्गभूते।

कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपात्योपकारकम्। यथा यागम् उद्दिश्य व्रीहीन् प्रोक्षति इति अदृष्टं प्रयोजनं, व्रीहीन् अवहन्ति इति दृष्टं प्रयोजनं च प्रतिपादयति। तथा यत् करणागतातिशयहेतुः तत् सन्निपत्योपकारकम्। सन्निपत्योपकारकं श्रवणं प्रधाने कर्मणि आत्मसाक्षात्कारे उपयुज्यते। तेन श्रवणं सन्निपत्योपकारकम्। तच्चाङ्गि। द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम्। आत्मगतातिशयहेतुः आरादुपकारकम्। आरादुपकारकेण अपूर्वम् उत्पद्यते। एवं मननिदिध्यासनयोः श्रवणफलब्रह्मदर्शननिष्पादकतया आरादुपकारके। ते चाङ्गभूते। यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यादिवाक्यस्य फलसाधनतायां तस्मिन् प्रकरणे प्रयाजादीनि उक्तानि। तद्वदेव श्रवणस्य फलसाधनतायै तस्मिन् प्रकरणे मनननिदिध्यासने उक्ते इति विवरणसम्प्रदायस्य मतम्।

---

1. श्वेतश्वतरोपनिषत् (1-3)

पुनः विवरणचार्यस्य मते तु- 'शक्तितात्पर्यविशिष्ट-शब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्' इति। प्रमेयं जीवब्रह्मैक्यम्। तं प्रति तात्पर्यविशिष्टवेदान्तवाक्यजन्यं ज्ञानमेव कारणम्। अव्यवहितपदेन साक्षाद्रूपम् इत्यर्थः। अर्थात्, आत्मसाक्षात्कारं प्रति श्रवणं प्रधानकारणमिति सिद्धम्। परन्तु मननं निदिध्यासनं च आत्मसाक्षात्कारे न प्रधानकारणम्। ते चित्तैकतासम्पादनेन ब्रह्मानुभवहेतुतां प्रति उपपद्येते। ते च न अव्यवहिते। तस्मात् मनननिदिध्यासने आत्मसाक्षात्कारं प्रति न प्रधानकारणे, अपि तु सहकारिकारणे एव। एवं प्रतिसम्प्रदायं श्रवणमनननिदिध्यासनानां कारणता भिद्यते एव।

## 9. श्रवणमनननिदिध्यासनानि सकृत् कर्तव्यानि उत असकृत्

श्रवणादीनि ब्रह्मप्राप्तये साधनानि कारणानि वा इति तु ज्ञातम्। किन्तु तेषाम् अनुष्ठानं किम् एकवारमेव कर्तव्यम् उत बहुवारम् इति आक्षेपस्तु जायते एव।

पूर्वपक्षिणां मीमांसकानाम् अभिप्रायस्तु- आत्मसाक्षात्कारम् उद्दिश्य श्रवणादीनि प्रवृत्तानि। विहितत्वात् तेषाम् अनुष्ठानम् अवश्यं कर्तव्यम्। सकृच्छ्रुतत्वात् तेषां सकृदनुष्ठानं कर्तव्यम्। यथा 'इडो यजति', 'बर्हिर्यजति' इत्यादयः पञ्च प्रयाजाः एकवारमेव श्रुताः। तस्मात् तेषां सकृत् अनुष्ठानम्। तद्वदेव श्रवणादीनामपि सकृत् अनुष्ठानं युक्तम्। तस्मात् सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति। तेनैव शास्त्रं कृतार्थं भवति। अन्यथा, अश्रूयमाणायाम् आवृत्तौ शास्त्रार्थः नैव फलति। 'यावज्जीवनम् अग्निहोत्रं जुहुयात्' इत्यत्र यथा जीवनपर्यन्तं अग्निहोत्रकार्यं सम्पादेयं, तथाविधानं श्रवणादीनां नास्ति। एवं विधानाभावात् श्रवणादीनि सकृत् अनुष्ठेयानि। पुनः यथा दर्शपूर्णमासे प्रयाजादयः सकृदनुष्ठिताः सन्तः अदृष्टार्थं जनयन्ति। तद्वत् श्रवणादीनि अपि प्रयाजादिवत् अदृष्टार्थं मोक्षं जनयन्ति इति पूर्वपक्षिणां मीमांसकानाम् अभिप्रायः।

परन्तु सिद्धान्ते तु ब्रह्मसूत्रप्रमाणं मानं भवति वेदान्तिनाम्। सूत्रप्रमाणं तावत्- 'आवृत्तिरसकृदुपदेशात्'[1] इति। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः निदिध्यासितव्यः' इति आत्मदर्शनम् उद्दिश्य श्रवणादीनि विहितानि। आत्मदर्शनं नाम आत्मापरोक्षानुभवः। यथा व्रीहीन् अवहन्ति इत्यत्र तण्डुलसम्पादनाय व्रीहीणाम् अवहननं कार्यम्। सकृद्वा द्विवारं त्रिवारं वा अवहननेन तण्डुलनिष्पत्तिः नैव जायते। अतः तद्दर्शनपर्यन्तमेव अवहननं कार्यम्। तथैव श्रवणादीनामपि। यावता आत्मसाक्षात्कारः न स्यात्तावता श्रवणादीनि अनुष्ठेयानि। भाष्यवचनं तावत्- 'दर्शनपर्यवसानानि हि श्रवणादीनि आवर्त्त्यमानानि

1. ब्रह्मसूत्रम् (4.1.1)

दृष्टार्थानि भवन्ति, यथावघातादीनि तण्डुलनिष्पत्तिपर्यवसानानि, तद्वत्'[1] इति। क्वचिच्च श्रूयते सम्प्रदायवचनं- 'श्रवणान्मननाद्ध्यानात्तात्पर्येण निरन्तरम्' इति। अतः तेषाम् अनुष्ठानम् असकृत् कर्तव्यानि इति सिद्धम्। पुनः उपनिषदि बहुवारं वेद उपासीत चेति श्रूयते। तत्रापि अन्तर्निहितरूपेण निदिध्यासनम् उपासनं च विवक्ष्यते। तथा च असकृदनुष्ठानं विवक्षितम् इति तात्पर्यम्।

### 10. किमर्थानि तर्हि श्रवणादिविधिच्छायानि वचनानि

एतावता श्रवणमनननिदिध्यासनानां स्वरूपं ज्ञानोपयोगित्वञ्चालोचितम्। केवलं किं ज्ञानोपायविधित्वेन श्रवणादीनां पर्यालोचनम् उत इतोऽपि अधिकं किञ्चित् फलं वर्तते न वेति संशयः। केचन समाधानानि अत्र प्रदर्श्यन्ते-

I. उच्यते तावत् "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ. 2।4।5) इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात्। तस्मात्प्रतिपत्तिविधिविषयतया च शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति" इति भावः। अर्थात् मननं निदिध्यासनं च ज्ञानविधिः। यतो हि उभयोः परमेव साक्षात् निर्विशेषसमाधिः। तस्मात् ज्ञानविधिविषयतया शास्त्रसिद्धस्य परमात्मनः अभ्युपगमाय इमानि श्रवणादिवचनानि।

II. ब्रह्मसूत्रशाङ्करभाष्ये "तत्तु समन्वयात्" इति सूत्रभाष्ये शङ्कराचार्यः श्रवणादेः उपयोगवाक्यानि कथयति- "स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः"[2] इति। 'इष्टं मे भूयादनिष्टं मा भूत्' इति यः पुरुषः आत्मज्ञानात् बहिर्मुखः प्रवर्तते, सः आत्यन्तिकं पुरुषार्थं प्राप्तुम् असमर्थो वर्तते। तम् आत्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकाधर्मात् कार्यकरणसङ्घातप्रवृत्तिलक्षणात् विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तनाय इमानि श्रवणादीवचनानि।

III. 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ. 2।4। 5) इत्येवंप्रकारकं श्रुतिवचनं कर्तृकर्मादिभेदवर्णनं जीवादधिकं ब्रह्म प्रदर्शयति। ब्रह्म सर्वज्ञं नित्यशुद्धबुद्धचित्स्वभावं, ततः शारीरकः जीवः भिन्नः। ब्रह्मणः न वा हितं कर्तव्यं किञ्चिद्वर्तते, न वा अहितं किचित् परिहर्तव्यं वर्तते। क्वापि तस्य शक्तिप्रतिबन्धः ज्ञानप्रतिबन्धः वा नास्ति। ततो भिन्नो संसारी जीवः। अतः तयोः भेदप्रतिपादने एव श्रवणादिवाक्यानां माहात्म्यम्। अतः द्रष्टृद्रष्टव्यादिभेदप्रतिपादनाय इमानि श्रवणमनन-निदिध्यासनानि।

---

1. ब्रह्मसूत्रशाङ्करभाष्यम् (4.1.1)
2. ब्रह्मसूत्रशाङ्करभाष्यम् (1.1.4)

IV. आत्मा वा अरे द्रष्टव्यः इत्यादिना आत्मोपासनरूपः विधिः अवगम्यते। मननं निदिध्यासनं च ज्ञानात्मिका क्रिया। यथा स्वर्गकामो यजेत इति भावनायां किं भावयेत्, केन भावयेत्, कथं भावयेत् इति अंशत्रयम् अपेक्षते। तथा द्रष्टव्यो इत्यत्रापि अंशत्रयम् अपेक्षते। कः द्रष्टव्यः इति आकाङ्क्षायाम् आत्मा द्रष्टव्यः। केन द्रष्टव्यः इति चेत् मनसा द्रष्टव्यः। कथं द्रष्टव्यः इति चेत् ब्रह्मचर्यशमदमादिकर्तव्यत्वेन आत्मा द्रष्टव्यः। तस्मात् समग्रस्य आत्मोपासनप्रकारस्य उपासनविध्युद्देशेन उपयोगाय इमानि श्रवणादिवचनानि।

**॥ उपसंहारः॥**

अद्वैतवेदान्तशास्त्रे ज्ञानोत्पत्तिप्रक्रिया तु किञ्चित् भिन्नरीत्या एवाङ्गीकृता वर्तते। ज्ञानोपत्तिप्रक्रियायां श्रवणादीनामुपयोगः कथं स्यात्तत् प्रतिपादनाय अयं लघुलेखः। एवं शमदमादिषट्कसम्पत्त्याचरणशीलः जननमरणरूपसंसारानलात् मुक्तये निष्कामतया नित्यनैमित्तिकादिकर्मपुरःसरं शास्त्राचार्योपदेशसंस्कृतेन मनसा श्रवणमनननिदिध्यासनैः आत्मदर्शनं कुर्यादिति सिद्धान्तः। श्रवणं मननं निदिध्यासनञ्च अवश्यमेव उपायभूतानि। नास्ति उपायज्ञानादृते उपेयसिद्धिः। अतः उपेयसिद्धये उपायानां श्रवणादीनां कारणत्व-प्रदर्शनायैवायं प्रयासः।

## सन्दर्भग्रन्थानां सूच्यः (मौलिकग्रन्थाः/सहायकग्रन्थाः)

**॥ संस्कृतग्रन्थाः॥**


1. श्रीधर्मराजाध्वरीन्द्रः। (2015)। वेदान्तपरिभाषा ( श्रीगजानन-शास्त्री-मुसलगाँवकर-कृतया प्रकाशटीकया समेता)। श्रीरामशास्त्री मुसलगाँवकरः (सम्पादकः)। वाराणसी : चौखम्बा विद्याभवन।
2. सदानन्दयोगीन्द्रः। (2019)। वेदान्तसारः ( रामतीर्थयतिकृतया विद्वन्मनोरञ्जनी-टीकया उपेतः)। बदरीनाथशुक्लः (व्याख्याकारः)। वाराणसी : मोतीलाल बनारसीदास।
3. श्रीविद्यारण्यमुनिः। पञ्चदशी (श्रीरामकृष्णकृतया तत्त्वदीपिकाटीकया श्रीअच्युत-रायमोडकविकृतया पूर्णानन्देन्दुकौमुदीटीकया च उपेता), आचार्यः करुणापति-त्रिपाठी (सम्पादकः)। उत्तर प्रदेश संस्कृत संस्थान।
4. शङ्कराचार्यः। (2018)। ब्रह्मसूत्रशाङ्करभाष्यम् (श्रीगोविन्दानन्दकृतया भाष्यरत्न-प्रभाटीकया श्रीवाचस्पतिमिश्रकृतया भामतीटीकया श्रीआनन्दगिरिकृतया

न्यायनिर्णयटीकया चोपेतम्)। आचार्यजगदीशशास्त्री (सम्पादकः)। मोतीलाल बनारसीदास।

5. श्रीशङ्करभगवत्पादाचार्यः। (2018)। उपनिषद्भाष्यम् (खण्डः 1) (श्रीमदानन्द-गिर्याचार्यकृतया टीकया उपेतम्)। श्री एस्. सुब्रह्मण्यशास्त्री (निर्देशकः)। वाराणसी : श्रीदक्षिणामूर्ति मठ प्रकाशन।

**॥ हिन्दीग्रन्थाः॥**

1. (1996), संस्कृत वाङ्मय का बृहद् इतिहास (दशम-खण्ड, वेदान्त), श्रीबलदेव उपाध्यायः (प्रधानसम्पादकः)। उत्तर प्रदेश संस्कृत संस्थान।

2. स्वामी अखण्डानन्दसरस्वती महाराज। (2007)। वेदान्तबोध। बम्बई : सत्साहित्य प्रकाशन ट्रस्ट।

**॥ वङ्गग्रन्थाः॥**

1. सदानन्दयोगीन्द्रः। (2016)। वेदान्तसार (सुबोधिनीटीकासहकृतः)। विपद्भञ्जन-पालः (अनुवादकः)। कोलकाता : संस्कृत पुस्तक भंडर।

2. (2006), सिद्धान्तलेशसंग्रह (मूल अनुवाद तात्पर्य), ललिता सेनगुप्ता । कोलकाता-संस्कृत पुस्तक भंडर।



# न्यायसिद्धान्तमुक्तावल्यां लक्षणाविमर्शः

**राज्यगुरुजयदेवः** *

विना वागाधारेण न जगति कश्चन व्यवहारः दृश्यते। तदेव उक्तम् ऋग्वेदस्य दशममण्डलस्य वाक्सूक्ते यत्- **अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।** अत एव वागवच्छिन्नस्य शब्दस्य शक्त्योः अन्यतमायाः लक्षणा-नाम्न्याः शक्त्याः निरूपणं न्यायसिद्धान्तमुक्तावल्यनुगुणमत्र प्रदर्श्यते। शब्दं प्रमाणरूपेण स्वीकर्तॄणां नैय्यायिकानां शब्दशक्तेः स्वीकारावसरे लक्षणां स्वीकर्तुं यानि प्रयोजनानि वर्तन्ते, तान्यत्र शोधपत्रे प्रदर्शयितुं चेष्ट्यते मया।

लक्षणा-ज्ञानात्पूर्वं शब्दार्थयोः स्वरूपज्ञानमत्यावश्यकं भवतीति धिया शोधपत्रेऽस्मिन् शब्दार्थयोः स्वरूपं साहित्यशास्त्रानुगुणं प्रदर्श्य शक्तिनिरूपणानन्तरं लक्षणानुधावनं प्रबोध्यते। तत्र तत्र च साहित्य-ग्रन्थानां व्याकरणग्रन्थानां प्रमाणानि दीयन्ते। तदनन्तरं लक्षणाविचार आरभ्यते। तत्रादौ वेदान्तिनां मते काः लक्षणाः वर्तन्त इति निरूप्य तासु का नैयायिकानां अनभिमता? किं चात्र प्रयोजनम्? तदत्र वैशिष्ट्येन दर्शनाय यत्नः विहितः। अनभिमतायाः लक्षणायाः कुत्राऽन्तर्भावः तदपि सुचारुरूपेण शोधपत्रे प्रबोध्यते। पत्रेऽस्मिन् मीमांसकानां लक्षणाविषये किमभिमतं वर्तते तदपि निरूप्य नः अनभिमतस्य विषयस्य प्रयोजनं प्रादर्शि।

नागेशाचार्याणां ग्रन्थे प्रदर्शितायाः लक्षणायाः व्युत्पत्तिः निरूप्यते। पत्रमिदं प्राचामभिमतायाः लक्षणायाः निष्प्रयोजनत्वं प्रदर्श्य नवीनानां मते तस्या अन्तर्भावः प्रदर्शयिष्यते। शोधपत्रेणानेन लक्षणाजिज्ञासूनां लक्षणाविषयीकी भीतिः वारयिष्यते। सर्वशास्त्राऽभिमतानां लक्षणानां संज्ञानं च भविष्यति। नव्यप्राचीननैयायिकयोः भाषा-कौशलं पत्रमिदं वक्ष्यति। लक्षणास्वीकारे प्रयोजनान्यपि अत्र प्रदर्श्यन्ते। इत्थं पत्रमिदं न्यायसिद्धान्तमुक्तावल्यनुसारं लक्षणाविषयं यथार्थं निरूपयतीति मे विश्वास अस्ति। इति शम्॥ **बीजशब्दाः ( Key - Words )- ऋग्वेदः, वाक्सूक्तम्, लक्षणा, वेदान्ती,**

* शोधच्छात्रः, भाषासाहित्यभवनम्, गुजरातविश्वविद्यालयः, अहमदाबादः।

**अन्तर्भावः, न्यायसिद्धान्तमुक्तावली, वैय्याकरणाः, साहित्यिकाः, शब्दः, अर्थः, वक्रोक्तिजीवितं, मीमांसा, अभिहितान्वयवादः, अन्विताभिधानवादः इत्यादयः..**
...........

**उपस्थापनम्**- कर्णरन्ध्रयोः लक्षणा-शब्दश्रवणेनैव साहित्यशास्त्रं नयनयोः पुरतः सर्वदा नरीनृत्यते।

शोधपत्रे लक्षणा-ज्ञानाय कश्चननूतनोपायः चिन्तितोऽस्ति। अत्रारम्भे शब्दस्वरूपं निरूपितं वर्तते। शब्दज्ञानसम्पन्नः पुरुषः अर्थानुधावनं करोत्यतः अर्थ स्वरूपं दर्शयितुं यत्न आचरितः। तदन्तरं पदस्याऽदिमा शक्तिः निरूपिता वर्तते। शक्यार्थस्य- बाधानन्तरमेव लक्षणानुधावनं भवति। अतः तदनन्तरं लक्षणा निरुपिताऽस्ति। तथा च-

अत्र विविदिषा भवति यत् किं नाम साहित्यम्? उच्यते यत् **सहितयोः शब्दार्थयोः भावं साहित्यम्।** अर्थात् शब्दस्य एवम् अर्थस्य च साहचर्यमेव साहित्यमुच्यते। उक्तं तदेव वक्रोक्तिजीवितकारेण यथा-

**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।**
**अन्यूनातिरिक्तत्वमनोहारिण्यवस्थितिः॥**[1]

अत्र जिज्ञासा जायते यत् कौ शब्दार्थौ? तत्र प्रमाणम्उपतिष्ठते यत्-

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।**
**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥**[2]

शब्दो नाम य अनेकेषु अर्थेषु सत्सु अपि विवक्षितं अर्थं बोधयितुं समर्थः। अर्थस्तु बोध्यं पदार्थं बुद्ध्वा उत्पन्नः सन्तोषविशेषः। इमावेव शब्दार्थौ शाब्दबोधं जनयितुं प्रवर्तेते। तर्हि कुतो अनयोः ज्ञानं सम्भवेत्? इति चेत् तत्र आदौ भगवता पाणिनिना विरचितं शब्दशास्त्रं यच्च व्याकरणशास्त्रमिति नाम्ना जगति प्रसिद्धं वर्तते तदेव नः शब्दान् बोधयितुमुपकुरुते। उक्तं भगवता पतञ्जलिना महाभाष्ये यथा-

**लघ्वर्थं च अध्येयं व्याकरणम्।**[3]

अनेनैव शब्दानां प्रयोजनं माहात्म्यं च ज्ञातुं शक्यते। अर्थमभिदधति यथा-

**अर्थे शब्दाः प्रयुज्यन्ते।** इति।।[4]

---

1. वक्रोक्तिजीवितम्
2. वक्रोक्तिजीवितम्
3. महाभाष्यम्- पस्पशाह्निकम्
4. महाभाष्यम्- पस्पशाह्निकम्

शब्दार्थयोः महत्वं ब्रूते-

**यथा वेदशब्दाः नियमपूर्वम् अधीताः फलवन्तः भवन्ति। एवं यः शास्त्रपूर्वकम् शब्दान् प्रयुङ्क्ते सः अभ्युदयेन युज्यते इति।**[1]

अर्थात् यः शास्त्रपूतान् शब्दान् प्रयुङ्ते सोऽभ्युदयमवाप्नोति। अतः अभ्युदयाय शब्दज्ञानमावश्यकम्। यथोक्तं **'वर्णसमूहः पदं'** तर्हि किं तस्य पदज्ञानस्य फलमिति फलसिद्ध्यै विवक्षति विश्वनाथपञ्चाननभट्टाचार्यः स्वविरचितायां न्यायसिद्धान्तमुक्तावल्यां शब्दखण्डे। यथा-

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥**[2]

अत्र ग्रन्थकारः पदज्ञानस्य फलमाह यत्- पदज्ञानस्य फलं शाब्दबोध अस्ति। अत्र अवधानं देयं यथा-

**अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः।**
**एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः।**
**पदज्ञानकरणकं ज्ञानं शाब्दबोधः॥**[3]

| **करणम्** | **व्यापारः** | **फलम्** |
|---|---|---|
| प्रत्यक्षः | इन्द्रियार्थसन्निकर्षः | प्रत्यक्षज्ञानम् |
| व्याप्तिज्ञानम् | परामर्शः | अनुमानज्ञानम् |
| सादृश्यज्ञानम् | अतिदेशवाक्यार्थस्मरणम् | उपमानज्ञानम् |
| पदज्ञानम् | पदजन्यपदार्थोपस्थितिः | शब्दज्ञानम् (शाब्दबोधः) |

अतोऽत्र ज्ञायते यत् पदज्ञानस्य फलं शब्दज्ञानं वा शब्दादागतो बोधविशेषः शाब्दबोधो वा अस्ति। परं तत्रोक्तम्- **'शक्तिधीः सहकारिणी'** इति। तर्हि का शक्तिः? उत्तरति यथा-

**वृत्तिश्च शक्तिलक्षणाऽन्यतरसम्बन्धः।**[4]

अर्थात् वृत्तिः द्विविधा 1. शक्तिः, 2. लक्षणा। एतयोः लक्षणां विविदिषामः। इयं लक्षणा प्रायः सर्वैः दार्शनिकैः, वैय्याकरणैः, साहित्यिकैः शब्दप्रामाण्यस्वीकर्तृभिः

---

1. महाभाष्यम्- पस्पशाह्निकम्
2. न्यायसिद्धान्तमुक्तावली(शब्दखण्डः)
3. न्यायसिद्धान्तमुक्तावली (अनुमानखण्डः)
4. न्यायसिद्धान्तमुक्तावली ( शब्दखण्डः)

शिरसि गृहिता वर्तते। यतोहि अर्थानवबोधयितुं सुसमर्थैषा लक्षणा। इयं लक्षणा अमुख्यवृत्तिः, गौणवृत्तिः, भक्ति इत्यादिभिः शब्दैः शास्त्रेषु अभिहिता। इदानीं सामान्यतः तस्याः स्वरूपं पश्यामः। यथा–

**मुख्यार्थबाधे तद्युक्तो ययान्योर्थः प्रतीयते।**
**रूढेः प्रयोजनाद्वासौ लक्षणाशक्तिरर्पिता॥5॥**[1]

सर्वसाधारणैषा लक्षणा यदा यदा शक्त्यागम्यमानस्यार्थस्य बाधः भवति तदैषा लक्षणा रूढ्या वा प्रयोजनात् प्रवर्तत इति राद्धान्तः साहित्यदर्पणकर्तॄणां विश्वनाथाचार्याणाम्। तर्हि सामान्यतः लक्षणायाः भेदान् पश्यामः। विविधशास्त्रानुगुणं लक्षणा निरूप्यते। आदौ तावत् वेदान्तीनां मते लक्षणाभेदान् जानीमः।

### 1. वेदान्तिनां मते लक्षणा।

अद्वैतवेदान्तिनः अध्यारोपाऽपवादाभ्यां **'तत्त्वं'** पदार्थदर्शनसमये एनां लक्षणां स्वीकुर्वन्ति। यतोहि विना लक्षणया न तत्त्वमिति पदज्ञानं सम्भवति, न च तेन विना ब्रह्मतत्त्वज्ञानं सम्भवति। अत्र वेदान्तिभिः तिस्रः लक्षणाः स्वीकृताः।

1. **जहल्लक्षणा।**
2. **अजहल्लक्षणा।**
3. **जहदजहल्लक्षणा च।**[2]

अत्र जहद् इति पदे **ओहाक्-त्यागे**[3] इति धातुः वर्तते, यस्यार्थः त्याग इति भवति। जहल्लक्षणा नाम यत्र शब्दः स्वार्थं परित्यज्य नूतनमेवार्थं गृह्णाति तत्र जहल्लक्षणा ग्राह्या। उदाहरणानुगुणं पश्यामः यथा **'गङ्गायां घोषः'**। अस्यार्थः जलप्रवाहे आभीरपल्ली। अत्र गङ्गापदस्य जलप्रवाहरूपार्थं परित्यज्य गङ्गातटे आभीरपल्लीरिति अर्थः स्वीक्रियते। इयमेव जहल्लक्षणा॥

अजहल्लक्षणा नाम यत्र शब्दः स्वार्थमपरित्यज्य नूतनार्थमपि गृह्णाति तत्र स्यादजहल्लक्षणा। उदाहरति यथा–**'शोणो धावति'** अर्थात् रक्तं रूपं धावति। अत्र रक्तरूपं धावतीत्यर्थमपरित्यज्य रक्तरूपवान् **'अश्वः धावति'** इत्यर्थस्यापि स्वीकृतिः भवति। इयमस्ति अजहल्लक्षणा।। जहदजहल्लक्षणा यथा यत्र किञ्चिदर्थस्य त्याग अपि

---

1. साहित्यदर्पणः– द्वितीयः परिच्छेदः
2. वेदान्तसारः
3. पाणिनियधातुपाठः– जुहोत्यादिगणः

भवति किञ्चिद् भागस्य अत्यागः भवति। यथा उदाहरति- **'सोऽयं देवदत्तः'।** अत्र भागद्वयं वर्तते।

**1. सः देवदत्तः- तात्कालिकः देवदत्तः (बाल्यकालिकः)**

**2. अयं देवदत्तः-एतत्कालिकः देवदत्तः (पुरतः विद्यमानः युवा देवदत्तः)**

अत्र **सः एवं अयमित्यनयोः** पदयोः त्यागः (जहत्) देवदत्तः इति भागस्य अत्यागः (अजहत्)। एषैव जहदजहल्लक्षणा॥

**2. मीमांसकानां मते लक्षणा।**

वाक्यशास्त्रमिति नाम्ना जगति ख्यातिं गतमिदं शास्त्रं भगवता जैमिनिना प्रणीतं मीमांसाशास्त्रम्। मीमांसकानां मते लक्षणां चिन्तयामः। मीमांसकास्तावत् मतद्वैविध्यं स्वीकुर्वन्ति लक्षणाविषये। तच्चमतद्वयम्। यथा-

**1. अन्विताभिधानवादः (कुमारीलभट्टः)**

**2. अभिहितान्वयवादः (प्रभाकरगुरुः)**

मते इमे शाब्दबोधार्थं प्रवृत्ते स्तः। तत्रैव लक्षणायाः चारितार्थ्यम्। तत्र च शाब्दबोधं प्रति भावनामुख्यविशेष्यकाः भाट्टाः। कार्यमुख्यविशेष्यकाः गुरवः।तत्र च भावना द्विविधा।

**1. शाब्दीभावना**

**2. आर्थीभावना**

तथा चाभिहितान्वयवादीनां मतं यथा- पदस्य पदार्थज्ञानं आकाङ्क्षा, आसत्तिः, योग्यतया अन्वितो भूत्वा लक्षणया शाब्दबोधं जनयति। उक्तं तदेव-

**साक्षाद् यद्यपि कुर्वन्ति पदार्थः प्रतिपादनम्।**
**वर्णास्तथापि तस्मिन् पर्यवस्यन्ति निष्फले॥**

**वाक्यार्थमितये तेषां प्रवृत्तो नान्तरीयकम्।**
**पाके ज्वालेव काष्ठानां पदार्थ-प्रतिपादनम्॥**[1]

अनेन ज्ञायते यत् वाक्यात् वाक्यार्थज्ञानं लक्षणया भवति अभिहितान्वयवादे। अन्विताभिधानवादः यथा पदेनैव अन्वयस्य पदार्थस्य च बोधः भवति। अतः लक्षणास्वीकारे न किमपि प्रयोजनम् अस्ति। उदाहरणं यथा **वृद्धव्यवहारः।** प्रथमवृद्धेन द्वितीयवृद्धाय

---

1. श्लोकवार्तिकम्- ( शब्दपरिच्छेदः)

गामानय इत्युच्चारिते द्वितीयवृद्धेन पशुः आनीयते। तेन बालकस्य बोधः जायते यत् गौः इति पदेन सास्नालाङ्गुलककुदखुरविषाणवानयं पशु इति बोधः। अतः कार्येण बोधत्वात् न लक्षणा एतेषां मते।

### 3. वैय्याकरणानां मते लक्षणा।

अभिधा एव मुख्या, तेषां वैयाकरणानां मते, तथापि वैय्याकरणसिद्धान्तपरम-लघुमञ्जूषाकारेण नागेशेन लक्षणायाः स्वरूपं प्रदर्शितं वर्तते। तत्र च वैय्याकरणानां मते प्रकारान्तरेण लक्षणा द्विविधा। तद्यथा-

**1. प्रयोजनवती। 2. निरूढा। च लक्षणा द्विविधा मता।।**[1]

अर्थात् वैय्याकरणानां मते लक्षणायाः द्वैविध्यं वर्तते। अत्र ते आदौ निरूढाम् अभिदधति यथा-

**असति प्रयोजने शक्यसम्बन्धो निरूढा लक्षणा।**[2]

अर्थात् यत्र प्रयोजनं नास्ति तत्र वाच्यार्थस्य सम्बन्धः निरूढा लक्षणा कथ्यते। यथा- त्वचा ज्ञातम्। अत्र त्वक् शब्दस्य त्वगिन्द्रियम् इत्यर्थे लक्षणा। अत्र किञ्चिद् अवधेयं यत् नागेशाचार्याणां मतेएषा **लक्षणा अभिधायाः पर्यायरूपेण** वर्तते।तदनन्तरं प्रयोजनवतीं निरूपयन्ति यथा- **गङ्गायां घोषः** इत्यत्र गङ्गाजलप्रवाहरूपामेवार्थं न परं तत्र प्रयोजनं प्रदर्शयन्ति यथा- गङ्गास्थं शैत्यं, पावनत्वम् इत्यादीनां गङ्गातीरेऽपि अनुभवः। अपरं उदाहरति यथा- **गौर्वाहीकः** इत्यत्र गोः सादृश्यं वाहिकप्रदेशस्थपुरुषे वर्तत इति गवाऽभेदः पुरुषस्येति प्रयोजनं ज्ञेयम्। **कुन्ताः प्रविशन्ति** अत्र प्रयोजनजिज्ञासायां नागेशः व्यनक्ति यत् अत्र भीतानां पुरुषाणां धावन-प्रसङ्गे यत् कुन्ताः प्रविशन्ति इति प्रोच्चारणे कुन्ताधारिणां पुरुषाणां हस्ते विद्यमानानां कुन्तानां तैक्ष्ण्यप्रतीतिः।

### 4. साहित्यिकानां मते लक्षणा।

विषयोऽयं साहित्यशास्त्रे विशदतया निरूपितः वर्तते। आलङ्कारिकाः प्रायः लक्षणाविषये भिन्नानि मतानि मन्वते। तत्रापि पश्यामः यथा- काव्यप्रकाशे मम्मटाचार्यः लक्षणां निरूपयति यथा-

---

1. वैय्याकरणसिद्धान्तपरमलघुमञ्जूषा
2. वैय्याकरणसिद्धान्तपरमलघुमञ्जूषा

**मुख्यार्थबाधे तद्योगे रूढितोथप्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया।।**[1]

तिस्रः हेतुमतीयं लक्षणा वर्तते। अर्थात् 1. यत्र अभिधाया अर्थस्य बाधः दृश्यते। 2. तथा च तस्य अन्येन अर्थेन सह सम्बन्धः। 3. रूढ्या वा प्रयोजनेन लक्ष्यते तत्र लक्षणा ज्ञेया। एते तत्र हेतवः सन्ति। तत्र च रूढेः उदाहरणं **कर्मणि कुशल** अत्र कुशलस्य रूढ्या दर्भग्रहणपटुः यः पुरूषः तत्र लक्ष्यते। तथा च प्रयोजनस्योदाहरणं **गङ्गायां घोषः** इत्यस्य पावनत्वादिधर्मज्ञानस्य प्रयोजनात् तत्र प्रयोजनकारणात् लक्षणा। सा लक्षणा काव्यप्रकाशकारेण षड्धा स्वीकृता वर्तते। तस्याः भेदान् पश्यामः।

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा।।**[2]

तत्र चादाविदं ज्ञेयं यत् मम्मटाचार्यः लक्षणायाः भेदद्वयं कुरुते। तौ च भेदौ यथा– **शुद्धा, गौणी।** तत्र च शुद्धा नाम **यत्र सादृश्येतरसम्बन्धः भवति** तत्र शुद्धा लक्षणा ज्ञेया। सादृश्येतरसम्बन्धो नाम साहचर्यसम्बन्धः, सामीप्यसम्बन्धः, कार्यकारण–भावसम्बन्धः, तात्कर्म्यसम्बन्ध इत्यादयः। इदानीमेतस्याः शुद्धायाः भेदद्वयं निरूपयति। यथा–

**1. उपादानशुद्धालक्षणा। ( इयमेव अजहल्लक्षणा ), 2. लक्षणशुद्धालक्षणा। ( इयं जहल्लक्षणा )।**

सोदाहरणं पश्यामः यथा– **1. उपादानशुद्धालक्षणा। ( इयमेव अजहल्लक्षणा )** नाम यत्र अभिधया आगतस्य स्वार्थस्य त्यागम् अकृत्वा परार्थमपि लक्षयति सा लक्षणा उपादानशुद्धालक्षणा। उदाहरणेन पश्यामः **कुन्ताः प्रविशन्ति।** अत्र कुन्ताः प्रविशन्ति इति वाक्यार्थस्य त्यागं विना कुन्तधारिणः पुरुषाः प्रविशन्तीति अर्थस्य स्वीकारः लक्ष्यते। अर्थात् स्वार्थस्य सिद्ध्यर्थं परार्थस्याक्षेपस्य स्वीकारः कृतः वर्तते।

**2. लक्षणशुद्धालक्षणा** तु अन्यार्थं साधयितुं निजार्थस्य नितरां त्यागोच्यते। यथा– **गङ्गायां घोष** इत्यत्र घोषस्याधिकरणं गङ्गातटः वर्तते। अत अत्र गङ्गा पदस्य जलप्रवाहरूपार्थं स्वार्थं तटादौ घोषान् साधयितुं जहति। एषैव लक्षणशुद्धालक्षणा। इमे शुद्धायाः भेदे। **गौणी नाम सादृश्यसम्बन्धेन प्रतिपाद्यमाना लक्षणा।** इदानीं शुद्धा एवं गौणी इत्यनयोः भेदद्वयं निरूप्यते। तौ च भेदौ–

---

1. काव्यप्रकाशः (द्वितीय उल्लासः)
2. काव्यप्रकाशः (द्वितीय उल्लासः )

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा।**
**विषय्यन्तः कृतेन्यस्मिन्सा स्यात्साध्यवसानिका॥**[1]

अर्थात् यत्र **विषये विषयिणः** आरोपः **क्रियते सा सारोपा कथ्यते।** एषा सारोपा द्विविधा। **1. सारोपाशुद्धालक्षणा, 2. सारोपागौणीलक्षणा।** यत्र च विषयि एव निरूप्यते विषयस्य निरूपणं नैव क्रियते अर्थात् यत्र विषयस्य निगीरणं विषयि द्वारा क्रियते सा लक्षणा गौणी कथ्यते। तस्या अपि द्वौभेदौ स्तः।

**1. साध्यवसानाशुद्धालक्षणा, 2. साध्यवसानागौणीलक्षणा**

**❖ षोढालक्षणाः सोदाहरणाः। (द्वितीय परिच्छेदः)**

| | लक्षणा | उदाहरणम् |
|---|---|---|
| 1. | उपादानशुद्धालक्षणा | कुन्ताः प्रविशन्ति |
| 2. | लक्षणशुद्धालक्षणा | गङ्गायां घोषः |
| 3. | सारोपाशुद्धालक्षणा | आयुर्घृतम् |
| 4. | साध्यवसानाशुद्धालक्षणा | आयुरेवेदम् |
| 5. | सारोपागौणीलक्षणा | गौर्वाहिकः |
| 6. | साध्यवसानागौणीलक्षणा | गौरयम्[2] |

एवं काव्यप्रकाशकारमतानुगुणं लक्षणा न्यरूपि।

**❖ साहित्यदर्पणकारमतानुसारं लक्षणानिरूपणम्।**

साहित्यदर्पणस्य रचयिता विश्वनाथ आहत्य 80 लक्षणायाः भेदान् स्वीकरोति। तान् भेदान् सोदाहरणम्पश्यामः यथा–

**मुख्यार्थबाधे तद्युक्तो ययाऽन्योर्थः प्रतीयते।**
**रूढेः प्रयोजनाद्वासौ लक्षणाशक्तिरर्पिता॥5॥**[3]

1. रूढिमती लक्षणा– कलिङ्गः साहसिकः, 2. प्रयोजनवती लक्षणा– गङ्गायां घोष–ः 1+1=2

---

1. काव्यप्रकाशः(द्वितीय उल्लासः )
2. साहित्यदर्पणः (द्वितीय परिच्छेदः)
3. साहित्यदर्पणः (द्वितीय परिच्छेदः)

**मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये।**
**स्यादात्मनोऽप्युपादानाद् एषोऽपादानलक्षणा॥6॥**[1]

3. रूढी-उपादानलक्षणा (श्वेतो धावति), 4. प्रयोजनवती-उपादानलक्षणा-(कुन्ताः प्रविशन्ति) 1+1=2

**अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।**
**उपलक्षणहेतुत्वात् एषा लक्षणलक्षणा॥7॥**[2]

5. रूढीलक्षणलक्षणा (कलिङ्गः साहसिकः), 6. प्रयोजनवतीलक्षणलक्षणा (गङ्गायां घोष):1+1=2,2+2+2=6

**आरोपाऽध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा।**
**विषयस्याऽनिगीर्णस्याऽन्यतादात्म्यप्रतीतिकृत्॥8॥**

**सारोपा, स्यान्निगीर्णस्य मता साध्यवसानिका।**
**सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि॥9॥**[3]

❖ **सारोपा तथा साध्यावसाना। (8)**

7. रूढी-उपादानलक्षणासारोपा (अश्वः श्वेतः धावति)
8. प्रयोजन-उपादानलक्षणासारोपा (एते कुन्ताः प्रविशन्ति)
9. रूढिलक्षणलक्षणासारोपा (कलिङ्गः पुरुषः युध्यते)
10. प्रयोजनलक्षणलक्षणासारोपा(आयुर्घृतम्)
11. रूढि-उपादानलक्षणासाध्यावसाना (श्वेतो धावति)
12. प्रयोजन-उपादानलक्षणासाध्यावसाना (कुन्ताः प्रविशन्ति)
13. रूढि लक्षणलक्षणासाध्यावसाना (कलिंगः साहसिकः)
14. प्रयोजन लक्षणलक्षणासाध्यावसाना (गंगायां घोषः) 4+4= 8

**सादृश्यात्तु मता गौण्यस्तेन षोडशभेदिताः।**[4]

इदानीं एते षोडशलक्षणाः शुद्धा एवं गौणी इति भेदाभ्यां 16 प्रकारिका: भवन्ति।

---

1. साहित्यदर्पणः (द्वितीय परिच्छेदः)
2. साहित्यदर्पणः (द्वितीय परिच्छेदः)
3. साहित्यदर्पणः (द्वितीय परिच्छेदः)
4. साहित्यदर्पणः (द्वितीय परिच्छेदः)

**व्यङ्ग्यस्य गूढागूढत्वात् द्विधा स्युः फललक्षणा॥10॥**[1]

अत्र षोडश लक्षणासु याः प्रयोजनवत्यः वर्तन्ते अर्थात् रूढीमत्याः अष्टौ भेदान् परित्यज्य याः प्रयोजनवत्यः अष्टप्रकारकाः वर्तन्ते तासां पुनः भेदौ भवतः। तौ च भेदौ

**1. गूढव्यङ्ग्या= 8**

**2. अगूढव्यङ्ग्या = 8 ( 8+8=16 ) ( प्रयोजनवती )**

**धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा।**[2]

अस्याः गूढागूढव्यङ्ग्यायाः प्रयोजनवत्याः पुनः द्वौ भेदौ भवतः। तौ च भेदौ यथा–

**1. धर्मिगतप्रयोजनवती = 8**

**2. धर्मगतप्रयोजनवती = 8 ( 8+8=16 )**

तथा च इदानीं लक्षणा–

**1. प्रयोजनवतीगूढागूढव्यङ्ग्या। 16**

**2. धर्मिधर्मगतप्रयोजनवती। 16 ( 16+16 32 )**

**तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः॥11॥**[3]

तथा च प्रयोजनवत्यां अष्टौ रूढीमत्याः योजनम्। यथा–

**1. प्रयोजनवती। 32**

**2. रूढीमती। 08 ( 32+08 = 40 )**

**पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा॥**[4]

एषाऽपि चत्वारिंशत् प्रकारिका लक्षणा पुनः द्वेधा विभक्ता

पदगतलक्षणा + वाक्यगतलक्षणा

40+40 =80

इत्येवं अशीतिप्रकारिका लक्षणा साहित्यदर्पणमनुसृत्य विश्वनाथमतानुगुणं निरूपिता।

---

1. साहित्यदर्पणः (द्वितीय परिच्छेदः)
2. साहित्यदर्पणः (द्वितीय परिच्छेदः)
3. साहित्यदर्पणः (द्वितीय परिच्छेदः)
4. साहित्यदर्पणः (द्वितीय परिच्छेदः)

**5. नैय्यायिकानां मते लक्षणा–**

न्यायसिद्धान्तमुक्तावलीकारः विश्वनाथपञ्चाननभट्टाचार्यः पदचातुर्विध्यं निरूप्य लक्षणानिरूपणमारभते–

**लक्षणा शक्यसम्बन्धः तात्पर्यानुपपत्तितः।**[1]

अत्र पदमस्ति **शक्यसम्बन्धः** अर्थात् शक्त्यागतः यः बोधः तस्यापरेण सम्बन्धविशेषः। यथा **गङ्गायां घोषः** इत्यत्र गङ्गापदस्य जलप्रवाहरूपार्थः शक्यार्थः तस्य सामीप्यरूपसम्बन्धः तीरे वर्तते, स च शक्यसम्बन्ध अस्ति। अतः गङ्गायां घोष इत्यस्य शक्यार्थस्य जलप्रवाहरूपशक्यार्थे घोषस्य सम्बन्ध अनुपपन्नः। अतः गङ्गायां घोष इत्यस्य शक्यार्थस्य गङ्गातीररूपे लक्ष्यार्थे सामीप्यसम्बन्धात् गङ्गातीरे आभीरपल्लीत्यर्थः लक्षणया एव बुध्यते। **अत एव ज्ञायते यत् लक्षणायाः बीजं अन्वयानुपपत्तिः वा तात्पर्यानुपपत्ति अस्ति।** तत्रापि **प्राञ्चाः तु अन्वयानुपपत्तिं** लक्षणायाः बीजं मन्वते। **नव्यास्तु तात्पर्यानुपपत्तिमेव** कारणत्वेन स्वीकुर्वन्ति। तत्र प्रमाणयन्ति। यथा– **यष्टीः प्रवेशय** अत्र यष्टिधरेषु लक्षणानुपपत्तिः। यतोहि अत्र यष्टेः प्रवेशः तु अस्त्येव, अत्र अन्वयोपपत्तिः जाता। अतः अत्र प्राञ्चानां मतमसमीचिनं वर्तते। परं तात्पर्यानुपपत्तिरेव बीजं ज्ञेयम्, यतोहियष्टीः प्रवेशय इत्युच्चारयितुः पुरूषस्य यष्टिधराणां भोजनाय तात्पर्यं वर्तते। सम्प्रति यष्टी इत्यस्य शक्यार्थः दण्ड एव स्वीक्रियते चेत् दण्डस्य भोजनाय तात्पर्यानुपपत्तिरेव। अतः यष्टीपदस्य यष्टिधरेषु लक्षणा क्रियते। तथा च मुक्तावलीकारः लक्षणायाः द्वैविध्यमेव स्वीकरोति।

**1. जहत्स्वार्था लक्षणा**

**2. अजहत्स्वार्था लक्षणा**

सोदारणं पश्यामः यथा **1. जहत्स्वार्था लक्षणा।** अत्र **ओहाक्** इति त्यागार्थकः धातुः।

**जहति परित्यजन्ति स्वानि यं स जहत्वोर्थ।**
**जहत्वोर्थो यस्याः लक्षणायाः सा जहत्स्वार्था।**[2]

स्वानि पदानि शब्देनैव ज्ञायते यत् यत्र स्वार्थं नैजार्थं त्यज्यते तथा च नूतनार्थं स्वीक्रियते सा लक्षणा **जहत्स्वार्था लक्षणा।** उदाहरणं तावत् **गङ्गायां घोषः** अत्र जलप्रवाहरूपार्थं स्वार्थं परित्यज्य नूतनार्थं गङ्गातीरे घोषः इति गृह्यते।

1. कारिकावली
2. वैय्याकरणसिद्धान्तपरमलघुमञ्जूषा

**अजहत्स्वार्था लक्षणा न जहत्स्वार्था अजहत्स्वार्था।**[1]

यथा यत्र स्वार्थमपरित्यज्यते तथा च नूतनार्थं स्वीक्रियते सा लक्षणा अजहत्स्वार्था लक्षणा। एनामुदाहरति यथा– **काकेभ्यो दधि रक्षताम्** इत्यत्र काकपदस्य **दध्युपघातकर्तृभ्यः काकः, बिडालः, वानर इत्यादिभ्यः दधि रक्षताम् इति तात्पर्यं न तु केवलं काकेन दधि रक्षताम्।** अत अत्र काकपदस्य काकरूपार्थमपरित्यज्य दध्युपघातकर्तृभ्यः दधिरक्षणस्य तात्पर्यत्वादत्र अजहत्स्वार्था लक्षणा।

**विमर्शः**

❖ वेदान्तिनां या तृतीयालक्षणा वर्तते या च जहदजहल्लक्षणा।सोऽयं देवदत्तः तथा च तत्त्वमसि इत्यस्मिन्वाक्ये लक्ष्यार्थं बोधयति सा नैय्यायिकैः न स्वीकृता। कारणं यत् सोऽयं देवदत्तः वा तत्त्वमसि इति वाक्ययोः यस्य भागस्य त्यागः करणीय अस्ति सो भागः अस्माकं जहत्स्वार्थालक्षणया त्यज्यते, तथा च यस्य भागस्य त्यागः नाऽपेक्षितः तस्य अजहत्स्वार्थया अपरित्यागः। अतः नात्र नूतनायाः लक्षणायाः स्वीकारे किमपि प्रयोजनम्।

❖ मीमांसकाः लक्षणा विषये न मतवैपरित्यं दर्शयन्ति। तेषां मतानुसारं लक्षणा पदेषु वाक्येषूभयत्र वर्तते। परं नैयायिकानां मते न वाक्ये लक्षणा। यथा–

**वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणापि नास्ति।**[2]

❖ वैय्याकरणेषु नागेशाचार्याः अस्माकं लक्षितलक्षणाः विस्तरेण खण्डनं कृतवन्तः। लक्षितलक्षणा निरूप्यते–

**मधुव्रतो मधुकरो मधुलिण्मधुपालिनः।**
**द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः।।**[3]

अत्र द्विरेफ इति पदं श्रूयते। अस्य बोधः प्राचीननैयायिकानां मतानुसारं लक्षितलक्षणया भवति। अत्र प्रश्नः भवति यत् का नाम **लक्षितलक्षणा?** अत्रोच्यते यत् यत्र शक्यार्थस्य साक्षात् सम्बन्धः भवति तत्र लक्षणा भवति, परं यत्र शक्यार्थस्य सम्बन्धः साक्षात् नास्ति परं परम्परयास्ति तत्र **लक्षितलक्षणा** ज्ञेया। तदुदाहरति– **द्विरेफः = भ्रमरः।** अत्र द्विरेफपदस्य **रेफद्वयवत् यत्किञ्चित्पदं** यथा रपरः, रथान्तरं इत्यादयः तद्वत् भ्रमरः अपि। अतः द्विरेफपदं शक्यसम्बन्धेन लक्षिते पदे भ्रमरपदे लक्षितम्,

1. वैय्याकरणसिद्धान्तपरमलघुमञ्जूषा
2. न्यायसिद्धान्तमुक्तावली
3. अमरकोषः, सिंहादिवर्गः

भ्रमरपदं च लक्षणया भ्रमरं बोधयति। अतः अत्र परम्परात्वात् लक्षितलक्षणा स्वीकृता। परं नव्यनैयायिकाः **लक्षितलक्षणां न स्वीकुर्वन्ति। ते जहल्लक्षणायाम् अस्यान्तर्भावं कुर्वन्ति।**

यथा द्विरेफपदं रेफद्वयवत् यत्किञ्चित्पदे शक्तं, अतः तदर्थं परित्यज्य भ्रमर इति नूतनार्थमेव लक्षयति। अतोऽत्र जहल्लक्षणा ज्ञेया। मम्मटाचार्याः लक्षणायाः शुद्धा एवं गौणी इति भेदाभ्यां षड् भेदान् कृतवन्तः, परं ते सर्वेऽपि भेदाः जहल्लक्षणायां तथा च अजहल्लक्षणायामन्तर्भवन्ति। यथा–

| **जहल्लक्षणायाम्** | **अजहल्लक्षणायाम्** |
|---|---|
| 1. लक्षणशुद्धालक्षणा | 1. उपादानशुद्धालक्षणा |
| 2. साध्यवसानाशुद्धालक्षणा | 2. सारोपाशुद्धालक्षणा |
| 3. साध्यवसानागौणीलक्षणा | 3. सारोपागौणीलक्षणा |

❖ साहित्यदर्पणे लक्षणाया अशीतिः भेदाः प्रदर्शिताः। परं तत्रापि रूढीमती, प्रयोजनवती च इति भेदौ प्रदर्शितौ वर्तेते। तथा च अत्रेदमवधेयं यत् याः रूढीमत्यः लक्षणाः वर्तन्ते तत्र नैयायिकानां **पदचातुर्विध्ये रूढपदे अन्तर्भावः ज्ञेयः। तथा च प्रयोजनवत्यः याः वर्तन्ते तासां अजल्लक्षणायामन्तर्भावः ज्ञेयः। तथा चान्ते द्वौ भेदौ कृतौ वर्तेते यौ च 1. पदगतलक्षणा, 2. वाक्यगतलक्षणा। अनयोः या वाक्यगतलक्षणा सा तु न नैयायिकैरभिमता।** यतो हि

**वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणापि नास्ति।**[1]

अतः वाक्ये तु शक्तेरभावात् नात्र लक्षणा।

**उपसंहारः**

सर्वैरपि दार्शनिकैः, साहित्यिकैः लक्षणायाः भेदाप्रभेदाः स्वशास्त्रराद्धान्तान् साधयितुं वा शाब्दबोधान् कर्तुं स्वीकृताः सन्ति। अनेन संशोधनेन ज्ञायते यत्–

- वेदान्तिनां लक्षणाविमर्शे तृतीयायाः लक्षणाया तेषां मते स्वीकृतिः नैयायिकानां मते तु तस्या अन्तर्भावस्य वैशिष्ट्यम्।
- मीमांसकमतगतायाः लक्षणायाः स्वीकृतिः नैाययिकैः कृता परं वाक्यविषयीणि लक्षणायाः परित्यागः शक्त्यभावात् वैशिष्ट्येन प्रदर्शितः।

1. न्यायसिद्धान्तमुक्तावली

- अभिधामेव मुख्यत्वेन मन्यमानानां वैयाकरणानां या निरूढाया: रूढपदे अन्तर्भाव: न: नैयायिकानां मतानुसारेण।
- आलङ्कारिका: तु लक्षणाविषये उदाहरणभेदेन लक्षणाभेदान् प्रदर्शयन्ति, अत: तेषामपि जहद् एवं अजहत् लक्षणायामन्तर्भाव: नैयायिका: कुर्वन्ति।
- अत इदानीं ज्ञायते यत् न्यायसिद्धान्तमुक्तावल्यां ये नैयायिकाभिमते द्वे लक्षणे वर्तेते ये च 1. जहत्स्वार्थालक्षणा, 2. अजहत्स्वार्थालक्षणातत्रैव अन्यासां लक्षणानामन्तर्भाव: वर्तते। तथा च त एव लक्षणे अन्यशास्त्रकारैरभिमता। इति शम्।।

**आकरग्रन्था:**

1. वक्रोक्तिजीवितम्- राजानककुन्तकविरचितम्। प्रथमोन्मेष:। चौखम्बा सुरभारती प्रकाशन- 2011
2. महाभाष्यम्- श्रीमद्भगवत्पतञ्जलिप्रणीतम्। चौखम्बा कृष्णा एकेडेमी- 2017
3. न्यायसिद्धान्तमुक्तावली- श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचिता। चन्द्रकलया व्याख्ययालंङ्कृतया दीनकर्या। चौखम्बा संस्कृत भवनम्- 2018
4. साहित्यदर्पण:- श्रीविश्वनाथकविराजप्रणित:। चौखम्बा सुरभारती प्रकाशन-2021
5. वेदान्तसार: ॐ- श्रीसदानन्दयतिविरचित:। परिमल पब्लीकेशन- 2017
6. सस्वर: पाणिनीयधातुपाठ:- दीक्षितपुष्पाकृत:। संस्कृतभारती- 2012
7. श्लोकवार्तिकम्- ( शब्दपरिच्छेद:)

   विकिस्रोत:-https://sa.wikisource.org/wiki/%E0%A4%B6%E0%A5%8D%E0%A4%B2%E0%A5%8B%E0%A4%95%E0%A4%B5%E0%A4%BE%E0%A4%B0%E0%A5%8D%E0%A4%A4%E0%A4%BF%E0%A4%95%E0%A4%AE%E0%A5%8D
8. वैय्याकरणसिद्धान्तपरमलघुमञ्जूषा-https://jainqq.org/explore/020919/127
9. काव्यप्रकाश:- श्रीमम्मटविरचित:। चौखम्बा ओरियन्टालिया-2021
10. साहित्यदर्पण:- श्रीविश्वनाथकविराजप्रणित:। प्रदीप-उद्योत-प्रभा व्याख्यासहीत:। मोतीलाल बनारसीदास पब्लीशर्स- 2016

11. साहित्यदर्पणः– श्रीविश्वनाथकविराजप्रणितः। कनकलताख्या हिन्दीव्याख्यासहीतः। मेहरचन्द लछमनदास पब्लीकेशन्स–2007

12. कारिकावली ॐ–श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचिता। प्रभा–मञ्जूषा– दिनकरी– रामरूद्री– सहिता। चौखम्बा संस्कृत प्रतिष्ठान– 2010

13. कारिकावली ॐ– श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचिता। चौखम्बा सुरभारती प्रकाशन– 2014

14. महाभाष्यम्– उद्योत टीका– श्रीनागेशभट्टकृता ( 2.1.1 पृ 29)

15. न्यायसिद्धान्तमुक्तावली– श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचिता। मोतीलाल बनारसीदास पब्लीशर्स– 2017

16. अमरकोषः– श्रीमदमरसिंहविरचितः। मोतीलाल बनारसीदास पब्लिशर्स– 2019

17. वैय्याकरणसिद्धान्तपरमलघुमञ्जूषा–श्रीनागेशभट्टकृता। चौखम्बा सुरभारती प्रकाशन– 2013



# तिङन्तेषु लोपपरम्परा

**नितिनशर्मा, शोधच्छात्रः***

**नमो लोप्याय चोलप्याय च।[1]**

सर्वप्रथमं व्याकरणदर्शनस्य आगमविकारप्रक्रियायाः सम्भावनां यः उत्पन्नां करोति एतादृशस्य लोपस्य बीजरूपेण, वेदेषु शङ्करस्य पर्यायं स्वीकृत्य तं नमस्कारं चकार।

व्याकरणशास्त्रशब्दस्य स्वरूपस्य सिद्धये निर्मिता एका काल्पनिका प्रक्रिया मन्यते। व्याकरणे लोपस्य प्रयोगेण अभीष्टरूपसिद्धौ अनिष्टानां ध्वनीनां निवारणमात्रं वर्तते। शास्त्रे लोपस्य बहूनि नामानि सन्ति यथा- लोपः, खं, अपायः विनाशः इत्यादयः। एतेषां नाम्नाम् उद्देश्यं वर्तते यत् शब्दशास्त्रस्य प्रक्रिया भवेत् एव। लोपस्य अर्थात् आकाशस्य (शून्यस्य) सार्वभौमिकता सर्वैः स्वीक्रियन्ते। अस्य शब्दस्य सत्ता वैदिककालात् आरम्भं कृत्वा अद्यावधिपर्यन्तं सर्वैः स्वीक्रियते।

### लोपस्य अर्थः एवं परिभाषा-

लोपः लुप् धातुना घञ्प्रत्ययेन निष्पन्नः भवति। यदा ध्वनेः वा वर्णस्य अनुच्चारणं अर्थात् न उच्चारणं क्रियते तदा तस्य नाम लोपः अस्ति। परञ्च अनुच्चारणात् अनन्तरम् अपि सः वर्णः तत्रैव विद्यते। पाणिनीयसूत्रपाठे लोपसंज्ञायाः बोधकं सूत्रमस्ति- अदर्शनं लोपः[2], जैनेन्द्रव्याकरणस्य सूत्रं वर्तते- नाशः खम्[3]। पतञ्जलेः महाभाष्ये लोपस्य अन्यं नाम अभावः[4]।

### किं नाम तिङन्तः-

पाणिनीयाष्टाध्याय्यां पठिताः तिप्तस्झि....[5] इत्यादि–अष्टादशप्रत्ययेषु "तिप्"

---

* केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरणवीरपरिसरः कोटभलवालः जम्मूः

1. तैत्तिरीय संहिता 4.5.9.10 (पृष्ठ 402)
2. अष्टाध्यायी 1.1.60 (पृष्ठ-7)
3. जैनेन्द्र महावृत्ति 1.1.61 (पृष्ठ- 14)
4. अभावो लोपः। महाभाष्य (अष्टाध्यायी-1.4.110) भाग-2 पृष्ठ 1240
5. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् (अष्टाध्यायी 3.4.78 पृष्ठ 171)

प्रत्ययस्य "ति" इति शब्दतः "महिङ्" इति पर्यन्तं तिङ्प्रत्याहारः भवति। तिङन्तरूपेण ये शब्दाः सन्ति तेषां पदसंज्ञा भवति। अतः पाणिनीयव्याकरणे आख्यातं तिङन्तः उच्यते।

धातुपाठे ये धातवः पठिताः तैः सार्धं प्रायः अनुबन्धाः सन्ति एव। तेषाम् अनुबन्धानाम् इत्संज्ञा भूत्वा लोपः भविष्यति। अनुबन्धानां परम्परा तिङन्तपदानां रचनाकाले लोपस्य परम्परा सोद्देश्यम् अस्ति। एषा परम्परा अद्भुता वर्तते। यथा- ये धातवः ङित् सन्ति ते आत्मनेपदं प्राप्नुवन्ति ये धातवः ञित् सन्ति ते उभयपदं प्राप्नुवन्ति। तिङन्तपदेषु लोपस्य प्रभावः अग्रे स्पष्टं भविष्यति।

### 1. ङित् लकारे प्रत्ययावयवानां नित्यलोपपरम्परा

**क. इकारलोपः**- "ङित्" लकारेषु इकारस्य (प्रत्ययावयवः) नित्यलोपः भवति।[1] यथा- अपचन्। अस्मिन् उदाहरणे अपच्+अन्ति (झि) इत्यावस्थायां "अन्ति" इत्यस्य इकारस्य लोपः भूत्वा अन्त् शेषो भवति तत्पश्चात् संयोगान्तस्य लोपः भूत्वा लङ्लकारे अपचन् पदं भवति। ङित् लकारे लङ्, लिङ्, लुङ्, लृङ् च विद्यते। उक्तलकारेषु इकारस्य लोपः अनिवार्यतः वर्तते। यदा लोपं न कुर्मः तदा अनिष्टं रूपं भविष्यति।

**ख. सकारलोपः**- "ङित्" लकारेषु उत्तमपुरुषस्य सकारस्य नित्यलोपः भवति।[2] यथा- अपचाव, अपचाम अस्मिन् उदाहरणे "वस्", "मस्" प्रत्यययोः सकारस्य नित्यं लोपो भूत्वा लङ् लकारे "अट् पच् अ व", "अट् पच् अ म" इति रूपं भवति तत्पश्चात् दीर्घं जातम् अतः रूपं वर्तते अपचाव अपचाम च।

### 2. वेदेषु वैकल्पिकलोपः-

क. परस्मैपदस्य लट्-लकारे इकारस्य विकल्पेन लोपः वर्तते।[3] यथा- भविषत्/भविषति, भविषात्/भविषाति इत्यादयः।

ख. लेट्-लकारे उत्तमपुरुषस्य सकारस्य लोपः विकल्पेन क्रियते।[4] यथा-करवाव/ करवावः, करवाम/ करवामः।

---

1. इतश्च (अष्टाध्यायी 3.4.100 पृष्ठ 173)
2. नित्यं ङितः (अष्टाध्यायी 3.4.99 पृष्ठ 173)
3. इतश्च लोपः परस्मैपदेषु (अष्टाध्यायी 3.4.97 पृष्ठ 173)
4. सः उत्तमस्य (अष्टाध्यायी 3.4.98 पृष्ठ 173)

ग. घुसंज्ञक/अङ्गस्य लेट्-लकारे विकल्पेन लोपः दृश्यते।[1] यथा- दधत्/दधात्, ददत्/ददात्। दधद्रत्नानि दाशुषे।[2] सोमो ददद् गन्धर्वाय।[3]

परञ्च काशिकायां तु आट् आगमं कृत्वा ददात् इति रूपमेव भविष्यति न तु ददत्।[4]

### 3. लोट्-लकारे "हि" इत्यस्य लुक् व्यवस्था-

लोट्-लकारे हि इत्यस्य लुक् भवति- पठ् पच् गम् धाव् इत्यादि धातुषु हि लुक् दृश्यते परञ्च युहि रुहि इत्यादि रूपेषु "हि" इत्यस्य लुक् न दृश्यते यतोहि अत्र अकारान्ताङ्गं न दृष्ट्वा उकारान्ताङ्गं वर्तते। अतः उकारान्ताङ्गः लोपस्य बाधकम् अस्ति।[5] "हि" इत्यस्य यदा लुक् भवति तदा "हि" सन्धिकार्ये बाधकं न भवति। यथा- भव+इति भवेति।

परञ्च कुत्रचित् उकारान्तस्य प्रत्ययस्य यदा उकारस्य पूर्वे संयोगः न भवति एवं परे लोट्-लकारात् युक्तः "हि" भवति तदा तस्य लुक् भविष्यति।[6] यथा- शृणु, चिनु, सुनु, कुरु इत्यादयः। एतेषु उदाहरणेषु उकारात् पूर्वे संयोगः नास्ति अतः "हि" इत्यस्य लोपः जातः।

### 4. धातोः संसक्तः नकारलोपः-

क. "शप्" यदा परे भवति तदा दंश्, संज्, स्वञ्ज्, रञ्ज् इत्यादिषु धातुषु नकारस्य लोपो भवति।[7] यथा- दशति, सजति, अदशत्। परन्तु णिजन्तावस्थायां तु अनुनासिकस्य लोपः न भवति। यथा- रञ्जयति आदि। उभयत्र लोपः साधकः बाधकश्च भवति।

ख. यस्य इकारः इत्संज्ञकः न अस्ति एतादृशानां हलन्तानां धातूनां उपधाभूतस्य नकारस्य लोपः भवति यदा कित् ङित् च प्रत्ययाः परे भवन्ति।[8] यथा- स्नस्तः, ध्वस्तः, सनीस्नस्यते इति।

---

1. घोर्लोपो लेटि वा (अष्टाध्यायी 7.3.70 पृष्ठ 513)
2. ऋग्वेद- 4.15.3 पृष्ठ- 446
3. ऋग्वेदसंहिता 10.85.41 भाग 8, पृष्ठ 279
4. काशिकावृत्ति (अष्टाध्यायी 7.3.70) भाग-2 पृ.सं. 728
5. अतो हेः (अष्टाध्यायी- 6.4.105 पृष्ठ 464)
6. उतश्च प्रत्ययादसंयोगपूर्वात् (अष्टाध्यायी 6.4.106 पृष्ठ 464)
7. दंश-सञ्ज-स्वञ्जां शपि (अष्टाध्यायी 6.4.25 पृष्ठ 454)
8. अनिदितां हल उपधायाः क्ङिति (अष्टाध्यायी 6.4.24 पृष्ठ 453)

ग. श्नम् विकरणप्रत्ययात् परे नकारस्य लोपः भवति।[1] यथा–इन्धे (इन्ध् ते>इ श्नम् न्ध ते>इन् न्ध ते अत्र नकारस्य लोपः वर्तते।) इत्थं अनक्ति, भनक्ति, हिनस्ति इत्यादयः।

### 5. विकरणस्य उकारस्य लोपः-

क. डुकृञ् करणे धातोः परे प्रत्ययस्य उकारस्य नित्यलोपः भवति, यदा मकारवकारयोः परे।[2] यथा– कुर्वः, कुर्मः, कुर्वहे, कुर्महे।

ख. यकारादिप्रत्ययात् परे "कृ" धातोः परे "उ" प्रत्ययस्य लोपः भवति।[3] यथा– कुर्यात्, कुर्याताम्।

ग. "उकारस्य" वैकल्पिकः लोपः– एतादृशः उकारान्तप्रत्ययः यस्य उकारस्य पूर्वे संयोगः न भवेत् एवं यदा तस्य परे मकारवकारादयः प्रत्ययाः भवेयुः तदा उकारस्य विकल्पेन लोपः वर्तते।[4] यथा– शृणुमः/ शृण्मः, शृणुवः/ शृण्वः।

### 6. अकाराकारयोः लोपः-

क. आर्धधातुकप्रत्ययः परे भवति तदा अदन्ताङ्गस्य अकारस्य लोपः दृश्यते।[5] यथा धिनोति, धिनुतः। उदाहरणेऽस्मिन् आर्धधातुकः परे भूत्वा अकारस्य लोपः जातः।

ख. अजाद्यः कित् ङित् च प्रत्ययाः परे भवति तदा "गम्, हन्, जन्, खन् घस् च" धातूनाम् उपधायाः अकारस्य लोपः क्रियते, परञ्च "अङ्" प्रत्ययः यदा भवति तदा उपधायाः लोपः न क्रियते।[6] यथा– जग्मुः, जघ्नतुः, जज्ञे, चख्नतुः, घ्नन्ति इत्यादयः।

ग. "श्नम्" विकरणस्य अकारस्य एवम् अस् धातोः अकारस्य कित् ङित् सार्वधातुकात् परे लोपः क्रियते।[7] यथा– रुन्धः, रुन्धति, स्तः सन्ति इत्यादयः।

---

1. श्नान्नलोपः (अष्टाध्यायी 6.4.23 पृष्ठ 453)
2. नित्यं करोते (अष्टाध्यायी 6.4.108 पृष्ठ 464)
3. ये च (अष्टाध्यायी 6.4.109 पृष्ठ 464)
4. लोपश्चान्यतरस्यां म्वोः (अष्टाध्यायी 6.4.107 पृष्ठ 464)
5. अतो लोपः (अष्टाध्यायी 6.4.48 पृष्ठ 457)
6. गमहनजनखनघसां लोपः क्ङित्यनङि (अष्टाध्यायी 6.4.98 पृष्ठ 463)
7. श्नसोरल्लोपः (अष्टाध्यायी 6.4.111 पृष्ठ 464)

घ. "श्ना" विकरणप्रत्ययस्य एवं अभ्यस्तधातोः आकारस्य लोपः दृश्यते यदा कित् ङित् सार्वधातुकात् परे भवति।[1] यथा– श्ना– लुनते, लुनताम्, अलुनत। अभ्यस्त धातोः–मिमते, संजिहते।

ङ. यकाराद्यः सार्वधातुकात् परे यदि "हा" (ओहाक्) धातुः भवति तर्हि धातोः आकारस्य लोपः दृश्यते[2]। यथा– जह्यात्, जह्याताम्, जह्युः इत्यादयः। इत्थं डुदाञ् धातोः दद्यात्।

च. "दरिद्रा" धातोः आकारस्य लोपोऽपि भवति आर्धधातुकप्रत्ययस्य विवक्षायाम्।[3] यथा– दरिद्रितास्मि, दरिद्रिष्यामि इत्यादयः।

**7. सकार-लोपः**

क. धकारः यदि प्रत्ययस्य आदौ भवति तदा "सिच्" इत्यस्य अकारस्य लोपः दृश्यते।[4] यथा– अलविध्वम्, अपविध्वम्।

| | | | | |
|---|---|---|---|---|
| अट् | लू | इट् | सिच् | ध्वम् |
| अ | लो | इ | स् | ध्वम् |
| अ | लव् | इ | स् | ध्वम् |
| अ | लव् | इ | | ध्वम्– अलविध्वम् |

उदाहरणेऽस्मिन् "सिच्" इत्यस्य सकारात् परे धकारादिः प्रत्ययः "ध्वम्" अस्ति अतः सकारस्य लोपः अभवत्। अत्र लोपः अनावश्यकध्वनेः परिष्कारकम् अकरोत्। इत्थं प्रकारेण अन्येषां तिङन्तपदानां रचना कालेऽपि ज्ञातुं शक्यते।

ख. 1. "तास्" प्रत्ययस्य एवम् अस् धातोः सकारस्य लोपः भवति यदि सकारादि प्रत्ययः परे भवति।[5] यथा– कर्तासि। कर्तासे। असि इत्यादयः।

ख. 2. रेफादिप्रत्ययः यदा परे भवति तर्हि अपि "तास्" प्रत्ययस्य एवम् अस् धातोः सकारस्य लोपः क्रियते।[6] यथा– कर्त्तारौ, कर्त्तारः इत्यादयः।

---

1. श्नाभ्यस्तयोरातः (अष्टाध्यायी 6.4.112 पृष्ठ 464)
2. लोपो यि (अष्टाध्यायी 6.4.118पृष्ठ 466)
3. दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः (अष्टाध्यायी 4.4.114 वार्तिक)
4. धि च (अष्टाध्यायी 8.2.25 पृष्ठ 546)
5. तासस्तयार्लोपः (अष्टाध्यायी 7.4.50 पृष्ठ 525)
6. रि च (अष्टाध्यायी 7.4.51 पृष्ठ 525)

ग. ह्रस्वान्ताङ्गात् "अल्" परे भवति तर्हि सकारस्य लोपः दृश्यते।[1] यथा- अकृत, अकृथाः इत्यादयः।

घ. लिङ्-लकारे सीयुट् आगमः भवति।[2] यथा- पचेत। "पच् शप् सीयुट् सुट् त," "पच् अ सीय् स् त" इत्यत्र द्वयोः सकारयोः लोपो भूत्वा[3] "पच् ईय् त" रूपं निर्मीयते, तत्पश्चात् गुणं कृत्वा यकारलोपं च कृत्वा पचेत इति रूपं भवति।

## 8. "क्स" इत्यस्य वैकल्पिकलोपः-

दन्त्याक्षराः यस्य आदौ विद्यते एतादृशेभ्यः आत्मनेपदप्रत्ययेभ्यः परे "दुह्, दिह्, लिह्, गुहू च" चतुर्षु धातुषु "क्स" इत्यस्य विकल्पेन लुक् भवति।[4] अतः आत्मनेपदे तवर्गादि एवं वकारादिप्रत्ययानां ग्रहणमेव करोति। यतोहि लुक् संज्ञा सम्पूर्ण-प्रत्ययस्य अदर्शनस्य लोपः वर्तते, न तु एकादेशस्य अतः लुक् मात्रोच्चारणेन सम्पूर्ण "क्स" इत्यस्य लुक् भवति। यथा-

1. दुह् प्रपूरणे- अदुग्ध/अधुक्षत, अदुग्धाः/अधुक्षथाः, अधुग्ध्वम्/अधुक्षध्वम्।
2. दिह् उपचये- अदिग्ध/अधिक्षत
3. लिह् आस्वादने- अलीढ /अलिक्षत
4. गुहू संवरणे- न्यगूढाः/न्यधुक्षत

## 9. तिङन्तपदानां निर्माणे लुक् इत्यस्य महत्त्वम्-

यदा उकारान्ताङ्गस्य लुक् भवति एवं तत्पश्चात् हलादिपित् सार्वधातुकः भवति तदा वृद्धिरेकादेशः दृश्यते।[5] उकारान्ताङ्गस्य शपः लुक् यदा भवति तदैव उकारेषु वृद्धिरेकादेशः दृश्यते तथा शपानन्तरं हलादिपित् सार्वधातुप्रत्ययः अपि अपेक्षितः। यथा- स्तौति, यौति, नौति इत्यादयः।

## 10. ओकारान्त धातोः ओकारस्य लोपः-

ओकारान्तानां धातूनां ओकारस्य लोपः दृश्यते यदा "श्यन्" प्रत्ययः परे भवति।[6] यथा- शो तनूकरणे- शो य (श्यन्) तिप् >श् य ति > श्यति।

---

1. ह्रस्वादङ्गात् (अष्टाध्यायी 8.2.27 पृष्ठ 546 )
2. लिङस्सीयुट् (अष्टाध्यायी 3.4.102 पृष्ठ 173)
3. लिङः सलोपोऽनन्त्यस्य (अष्टाध्यायी 7.2.79 पृष्ठ 497)
4. लुग्वा दुहदिहलिगुहामात्मनेपदे दन्त्ये (अष्टाध्यायी 7.3.73 पृष्ठ 513)
5. उतो वृद्धिर्लुकि हलि (अष्टाध्यायी 7.3.89 पृष्ठ 515)
6. ओतः श्यनि (अष्टाध्यायी 7.3.71 पृष्ठ 513)

### 11. "शप्" विकरणस्य श्लुः–

जुहोति अर्थात् हु धातोः कर्तृवाचकात् सार्वधातुकात् परे शप्प्रत्ययस्य श्लुः क्रियते।[1] श्लु–इत्यस्यार्थः अस्ति लोपः। यथा– जुहोति > हु शप् ति > हु श्लु ति > हु*ति > हु हु ति > झु हुति > जुहुति> जुहोति इत्यादयः। उदाहरणेऽस्मिन् यदि शप् इत्यस्य श्लुः न करिष्यते तर्हि धातोः द्वित्वं न भवति। अतः शप् इत्यस्य श्लुः कृत्वा लोपस्य प्रयोजनं सिद्धं भवति।

### 12. वेदे आत्मनेपदस्य तकारस्य लोपः–

आत्मनेपदि यत् तकारः तस्य वेदविषये लोपः दृश्यते।[2] यथा– देवा अदुह्र।[3]

प्रायशः आत्मनेपदप्रत्ययस्य वेदे विकल्पेन लोपः क्रियते। ते> ए। शेते >शये।

### 13. णिचः लोपः–

अनिट् एवं सेट् धातूनां सन्दर्भे आचार्यः पाणिनि णिचः लोपाय द्वयं नियमः निर्मितः–

1. अनिडादि आर्धधातुकः यदा परे भवति तदा णिच्–इत्यस्य लोपः क्रियते।[4] इयङ्, यण्, गुणः, वृद्धिः, दीर्घः च इत्यस्य अपवादः भवति। यथा– अततक्षत्, अररक्षत, आटिटत् इत्यादयः।

2. सेट् निष्ठा परे भवति णिच् इत्यस्य लोपः दृश्यते।[5] यथा– कारितम्, हारितम्, गणितम्, लक्षितम् इत्यादयः।

### निष्कर्षः–

पाणिनीयव्याकरणे क्रियापदानां संज्ञायाः अपरं नाम तिङन्तः अपि उच्यते। धातुपाठे पठितः प्रायशः सर्वैः धातुभिः सह अनुबन्धानां प्रयोगं चकार, एतादृशः प्रयोगः सप्रयोजनः सोद्देश्यश्च वर्तते। यथा–

येषां धातूनाम् उदात्तः– अ, आ, इ, ई, उ, ऊ, ऋ, लृ, ए, ओ एतादृशाः अनुबन्धाः इत्संज्ञकाः भवन्ति। तेषां परस्मैपदसंज्ञारुपेण प्रयोगः दृश्यते। येषां धातूनाम्

---

1. जुहोत्यादिभ्यः श्लुः (अष्टाध्यायी 2.4.75 पृष्ठ 78)
2. लोपस्त आत्मनेपदेषु (अष्टाध्यायी 7.1.41 पृष्ठ 479)
3. मैत्रायणी संहिता 4.2.1
4. णेरनिटि (अष्टाध्यायी 6.4.51 पृष्ठ 457)
5. निष्ठायां सेटि (अष्टाध्यायी 6.4.52 पृष्ठ 457)

उपरिलिखिताः अनुदात्ताः स्वराः ङकारश्च इत्संज्ञकाः सन्ति ते आत्मनेपदं प्राप्नुवन्ति। येषां धातूनाम् अकारः ञकारश्च इत्संज्ञकाः भवन्ति तेः उभयपदं प्राप्नुवन्ति। परञ्च वेदेषु तु स्थितयः भिन्नाः एव सन्ति।

अतः तिङन्तपदेषु रचनाकाले लोपस्य विशिष्टः प्रभावः वर्तते।

## सन्दर्भ ग्रन्थ सूची


1. अष्टाध्यायीसूत्रपाठः, सम्पादक, सुधीर कुमार मिश्र, विद्यानिधि प्रकाशन, दिल्ली, 2016
2. ऋग्वेद (तीसरा चौथा एवं पांचवां मण्डल), गोविन्द चन्द्र पाण्डे, लोकभारती पुस्तक विक्रेता तथा वितरक, इलाहाबाद, 2008
3. ऋग्वेदसंहिता, व्याख्याकार डॉ. जियालाल कम्बोज, विद्यानिधि प्रकाशन, दिल्ली, 2013
4. काशिका व्याख्याकारः डॉ. रघुवीर वेदालङ्कारः, चौखम्भा ओरियन्टालिया दिल्ली, 2010
5. कृष्णयजुर्वेदीय तैत्तिरीय-संहिता मन्त्राः, R.L.Kashyap, Sri Aurobindo Kapali Shastri Institute of Vedic Culture, Bangalore, 2005
6. जैनेन्द्रमहावृत्तिः, सम्पादक पण्डित शम्भुनाथ त्रिपाठी, भारतीय ज्ञान पीठ, काशी, 1956
7. व्याकरणमहाभाष्यम्, व्याख्याकार प्रोफेसर भीमसिंह वेदालङ्कार, विद्यानिधि शोधसंस्थान, कुरुक्षेत्र, 2013




# ज्योतिषशास्त्रे उदररोगकारकयोगाः

**आशीषकुमारः***

जठरे ये रोगाः भवन्ति ते उदररोगाः उच्यन्ते। अरुचि, मन्दाग्निः, अजीर्णः, अतिसार, संग्रहणी, गुल्म, प्लीहा, कृमि, जलोदर एवं उदरशूलादि सर्वे रोगाः उदर-रोगाः उच्यन्ते। एते सर्वे उदर रोगाः ज्योतिषे विस्तरेण विचारिताः सन्ति।

**ग्रहसंयोगजन्य उदर रोगाः निम्नलिखिते-**

(1) जातकस्य जन्माङ्गे यदा चन्द्रमा सिंहराशिस्थः स्यात् तदा उदररोगाः भवन्ति।[1]

(2) लग्ने पापग्रहाः अथवा राहुः तिष्ठति एवं मन्देऽष्टमे भवति चेत् जातकः उदररोगेन पीडितः भवति।[2]

(3) रन्ध्रे मन्दे लग्ने चन्द्रे उदररोगः

अष्टमभावे यदा शनि एवञ्च लग्ने चन्द्रः तिष्ठति तदा उदररोगः भवति।[3]

(4) षष्ठेशे चन्द्रे पापयुते प्लीहरोगः।

षष्ठेशचन्द्रमा यदि पापग्रहानां युक्तः, लग्नेशः

सप्तमभावे क्रूरग्रहात् दृष्टः तथा शुभग्रहात् अदृष्टो भवति चेत् तदा प्लीहोदररोगो भवति।[4]

(5) अजीर्णगुल्मामयशूलमेति कुजे विलग्ने विषलेऽरिनाथे लग्ने सपापे फणिनायके वा मन्देऽष्टमे कुक्षिरुगर्दितः स्यात्।[5]

---

* शोधच्छात्र ज्योतिष विभागः, केन्द्रीय संस्कृत वि.वि. जम्मू।

1. बृहज्जातकम्, अध्यायः 17 श्लोकः 5
2. लग्ने सपापे फणिनायके वा मन्देऽश्ष्टमे कुक्षिरुगर्द्दितः स्यात्। जातकपरिजातः अध्यायः 6 श्लोकः 90
3. जातकतत्वम्, पृष्ठ विवेकः 60
4. जातकतत्वम्, पृष्ठ विवेकः 60
5. जातकपरिजातः, अध्यायः 6 श्लोकः 90

(6) यदि भौमः लग्ने स्थितः स्यात् षष्ठेशश्च बलहीनः स्यात् तदा जातकः आजीर्णरोगेण गुल्मरोगेण शूलरोगेण वा पीडितो भवति।[1]

(7) लग्ने यदि कश्चन पापग्रहः राहुर्वा स्थितः स्यात् तथा च अष्टमे शनिः स्यात् चेत् जातकः उदररोगेण पीडितो भवति।[2]

(8) यस्य जन्माङ्गे भौमशनैश्चरौ शत्रुस्थानगतौ तदा नरस्य उदररोगः भवति।[3]

(9) सिंहस्थे यदा चन्द्रमा स्यात् तदा उदररोगः भवति।[4]

(10) यदा कर्कराशिस्थशनि मकरस्थचन्द्रमा च तिष्ठति तदा जातकः जलोदररोगेण पीडितः भवति।[5]

(11) यदि षष्ठेशचन्द्रः पापग्रहेणां दृष्टः एवं अन्य कोऽपि शुभग्रहेण दृष्टः न स्यात् तदा मनुष्यः प्लीहरोगेण ग्रस्तः भवति।[6]

(12) सूर्यः जन्माङ्गेषु यदि जन्मराशौ भवति चेत् उदररोगः जायते।[7]

(13) यदि सूर्यः जन्मराशितः सप्तमे तिष्ठति तदा उदररोगो जायते।[8]

(14) जन्मराशितः चतुर्थे यदा भौमः स्यात् तदा उदररोगः भवति।[9]

(15) सप्तमेशः लग्नेशः यदा पापग्रहेषु दृष्टः एवं शुभग्रहदृष्टितः वंचितः तदा प्लीहरोगः निष्पद्यते।[10]

(16) सुहृते शनिः पापग्रहात् दृष्टः स्यात् एवं शुभग्रहात् अदृष्टः तदा जातके प्लीहरोगः भवति।[11]

(17) यदा लग्ने शनिः पापग्रहः युतः तथा च दुष्टः भवति तदा प्लीहरोगः।[12]

---

1. जातकपरिजातः, अध्यायः 6 श्लोकः 90
2. जातकपरिजातः, अध्यायः 6 श्लोकः 90
3. जातकालंकारः, अध्यायः 2 श्लोकः 20
4. बृहज्जातकम्, अध्यायः 17 श्लोकः 5
5. जातकपरिजातः, अध्यायः 6 श्लोकः 97
6. जातकालंकारः, अध्यायः 3 श्लोकः 25
7. बृहत्संहिता, पृ.सं. 489 ग्रहगोचराध्यायः, श्लोकः स. 5
8. बृहत्संहिता, पृ.सं. 489 ग्रहगोचराध्यायः, श्लोकः स. 6
9. बृहत्संहिता, पृ.सं. 489 ग्रहगोचराध्यायः, श्लोकः स. 13
10. जातकालंकारः, अध्यायः 3 श्लोकः 25
11. जातकालंकारः, अध्यायः 3 श्लोकः 25
12. जातकालंकारः, अध्यायः 3 श्लोकः 25

(18) षष्ठभावाधिपे चन्द्रे सौम्यदृष्टि: रहिते केवलं क्रूरैर्दृष्टे प्लीहपीडित: स्यात्।[1]

(19) यदा द्वितीयेश: पापयुक्त: भूत्वा दण्डायुधे षष्ठ्यंशे भवति तदा अधिकमात्रायां भोजनेच्छा जायते।[2]

(20) यदा जन्माङ्गेषु शत्रुभावस्थ: चन्द्र: तदा उदररोग: कारक: भवति।[3]

(21) षष्ठाष्टमे पापग्रह: भवेत्, सप्तमस्थपापग्रहेण सह षष्ठेश: स्यात् तदा प्रायश: रोगकारणं मल-मूत्रयो: वेगाणां धारणं भवति।[4]

(22) षष्ठे पापग्रह:, अष्ठमे शनिशुक्रौ, सप्तमे षष्ठेश: स्यात् तदोदरोग:। अत्र तिस्त्र: स्थितय: सन्ति।

- षष्ठे पापग्रह: भवेत्।
- सप्तमे षष्ठेश: भवेत्।
- अष्टमे शनिशुक्रौ च भवेताम्।[5]

(23) पञ्चमे स्थित: वक्रीग्रह: पाचनतन्त्रे दोषं जनयति सहैव रोगपक्षे लग्नेशचतुर्थेशयो स्थितिश्चापि माध्यम: अधिक: भवति यदा कदा उदरे शल्यक्रियाद्यनेन योगेन भवति।[6]

(24) लग्नेशाष्टमेशौ गुरुणा सह स्याताम्।
यदा गुरु अष्टमेशेन प्रभावित: भवति तदा पाचनशक्ते: ह्रास: भवति।[7]

(25) लग्ने शने: प्रभाव: निर्बलाष्टमेश: पापै: दृष्टस्तदा अजीर्णता।

लग्ने यदा शने: कुप्रभाव: भवति तदा कुसमये भोजनं, कुत्सितं भोजनमित्यादय: दोषा: जायन्ते।[8]

(26) बुध: शनिराशिस्थ: सूर्येण दृष्ट: स्यात् तदा अतिसार: जायते। यतोहि स: जातक: बहुभोजी भवति।[9]

---

1. सारावली, अध्याय: 3, श्लोक: स. 19
2. सारावली, अध्याय: 30 श्लोक: स. 19
3. सारावली, अध्याय: 30 श्लोक: 19
4. सारावली, अध्याय: 30 श्लोक: 52
5. गदावली 2-28-29
6. गदावली 2-28-29
7. सर्वार्थचिन्तामणि:, अध्याय: 7 श्लोक: 28-29
8. गदवली 2-29-30
9. सारावली 26-61

(27) यदा जन्माङ्गे तृतीयस्थगुरुभवति तदा मन्दाग्निर्जायते।[1]

(28) शत्रुभावे गुरुर्भवति चेत् जातकः दूषितजठराग्नियुतः भवति।[2]

(29) लग्नेशः च अष्टमेशः यदा गुरुयुतः स्यात् तदा उदरोगः जायते।[3]

(30) लग्नेश तथा गुरुषष्ठस्थाने भवति चेत् तदा उदररोगः जायते।[4]

(31) लग्नेश, चतुर्थेश एवं च अष्टमेश एकैव स्थाने भवति चेत् उदररोगः जायते।[5]

(32) शनिराशिस्थे बुधः तथा च सूर्येण दृष्टः तदा उदररोगः भवति।[6]

(33) लग्ने राहुर्बुधै एवञ्च सप्तमस्थे शनिराहु तिष्ठतः तदा उदररोगः भवति।[7]

(34) यदि जातकस्य जन्माङ्गे द्वौ ग्रहाणां मध्ये रश्मि एवं च सप्तम भावस्थमन्दः भवति तदा उदररोगः निष्पद्यते।[8]

(35) कर्कः वृश्चिकः अथवा कुम्भराशिस्थ नवांशे शनिचन्द्रयोर्युतिः तदा उदररोगः भवति।[9]

(36) लग्ने सूर्योपरि भौमस्य दृष्टिः यदा भवति तदा उदररोगः सञ्जायते।[10]

(37) षष्ठेशः निर्बलः तथा च लग्ने भौमः स्थितः तदा उदररोगः भवति।[11]

(38) यदि षष्ठेशः पापग्रहाणां युतः तनु एवं अष्टमे स्यात् तदा उदररोगः जायते।[12]

(39) यदि षष्ठस्थभौमः स्यात तदा उदर रोगः जायते।[13]

(40) षष्ठेशचन्द्रमा यदि पापग्रहेण युतः भवति उदररोगः।[14]

---

1. सारावली अध्यायः 30, श्लोकः 52
2. सारावली अध्यायः 30, श्लोक 55
3. सर्वार्थ चिन्तामणिः, अध्यायः 7, श्लोक 28
4. सर्वार्थ चिन्तामणिः, अध्यायः 27 श्लोकः 28-29
5. सर्वार्थ चिन्तामणिः, अध्यायः 7 श्लोकः, 28-29
6. सारावली अध्यायः, 26 श्लोकः 61
7. जातकतत्वं षष्ठविवेकः सूत्र सङ्ख्या 104
8. सारावली अध्यायः 34 श्लोकः 74
9. जातकतत्वं षष्ठविवेकः सूत्र सङ्ख्या 101
10. जातकपरिजातः अध्यायः 6 श्लोकः 62
11. सर्वार्थ चिन्तामणिः अध्यायः 5 श्लोकः 85
12. जातकालंकारः, अध्यायः 2 श्लोकः 17
13. जातकालंकारः, अध्यायः 2 श्लोकः 20
14. जातकतत्व षष्ठविवेकः, सूत्रसङ्ख्या 145

(41) लग्नेश: निर्बल: (अस्त:) एवञ्च क्रूरग्रहणां दृष्ट: एवं शुभग्रहणां (अदृष्ट:) तदा उदररोग: जायते।[1]

(42) चन्द्रराशीश एवं षष्ठभावेश यदि केवलं क्रूरग्रहाणां दृष्ट: तत: उदररोग: भवति।[2]

(43) लग्नेश अथवा सप्तमेश चन्द्रोपरि मात्र क्रूरग्रहाणां दृष्टि तदा उदररोगेण ग्रस्त: भवति।[3]

(44) शनि एवं भौमस्य मध्ये यदा चन्द्र: तिष्ठति तथा च मकरराशिस्थ: सूर्य: भवति तदा उदरोग: कारक: योग: भवति।[4]

(45) यदा चन्द्रमा एवं मन्द: पञ्चम भावे भवति तदा उदररोग: भवति।[5]

(46) अष्टमभावे क्षीण: चन्द्र: भवति चेत् उदर रोग: भवति।[6]

(47) यदि कर्कराशिस्थमन्द: तथा च मकरराशिस्थ: चन्द्र: स्थित: भवति तदा उदर रोग: जायते।[7]

(48) मन्द: यदा पञ्चमे भवति तदा उदररोग: जायते।[8]

(49) अष्टमे क्षीणचन्द्रमा उदररोग: भवति।[9]

(50) कर्कराशिस्थशनि तथा च मकरराशिस्थचन्द्र: तदा उदररोग: जायते।[10]

(51) रिपुस्थाने एवं व्यये यदा शनि एवं भौम: भवति तत: उदररोग: भवति।[11]

(52) सिह: राशिस्थशशिपापग्रहै: युत: स्यात् तदा उदर रोग: जायते।[12]

(53) लाभेश: तृतीयभावे तिष्ठति चेत उदररोग: सञ्जायते।[13]

---

1. जातकतत्वं सूत्रसङ्ख्या 146
2. जातकतत्वं, षष्ठविवेक सूत्रसङ्ख्या 147
3. जातकतत्वं, षष्ठविवेक सूत्रसङ्ख्या 148
4. जातकतत्त्वं, षष्ठविवेक: सूत्रसङ्ख्या 149
5. जातकतत्वं, षष्ठविवेक: सूत्रसङ्ख्या 150
6. सारावली अध्याय: 30 श्लोक: 21
7. जातकपारिजात: अध्याय: 6 श्लोक: 97
8. जातकपारिजात: अध्याय: 6 श्लोक: 150
9. सारावली अध्याय: 30 श्लोक: 21
10. जातकपारिजात: अध्याय: 6 श्लोक: 97
11. जातकतत्वम् षष्ठविवेक: सूत्रसङ्ख्या 133-36
12. जातकतत्वम् षष्ठविवेक: सूत्रसङ्ख्या 133-36
13. जातकतत्वम् षष्ठविवेक: सूत्रसङ्ख्या 133-36

(54) केन्द्र या त्रिकोणस्थाने सिहराशिस्थ शुक्रः तथा च तृतीयभावे गुरुः स्यात् तदा उदररोगः भवति।[1]

(55) जन्मसमयरिपुगृहे चन्द्रे क्रूरे दृष्टे सौम्यैर्न दृष्टे सति जातकः प्लीहवान् स्यात्।[2]

(56) यदा सप्तमेशः एवं लग्नेशः क्रूरैः ग्रहैः दृष्टः एवञ्च शुभैः ग्रहैः अदृष्टः तदा प्लीहरोगाः भवति।[3]

(57) यदि चतुर्थ भावे सौरी पापग्रहैः दृष्टः एवं युतः एवञ्च शुभग्रहाणां अदृष्टः स्यात् तधा प्लीह रोगाः भवति।[4]

(58) लग्नेश मन्दः पापग्रहेण युतः एवं दृष्टः भवति चेत् जातके प्लीह रोगा जायते।[5]

(59) यदा जन्माङ्गे अष्टमेश क्रूर ग्रहः सप्तं भावे स्थितः एवञ्च शुभग्रहः दृष्टिः विहीनः स्यात् तदा जायते उदर रोगः भवति।[6]

(60) तनु भावे पापग्रहः एवं अष्टमे शनि, राहु, केतु स्थितः भवति, जातकः उदर रोगेण ग्रहस्तः जायते।[7]

(61) यदि कर्क राशे मन्दः मकरे चन्द्रः स्थितः स्यात् तदा जलोदर रोगः जायते।[8]

(62) मन्दः यदा भौमेण संयुक्तः रिपु भावे स्थितः एवञ्च सूर्यः राहु पश्यति लग्नेश निर्बल स्यात् तदा जातकः दीर्घ कालिकः उदर रोगेण ग्रहस्तः भवति।[9]



---

1. जातकतत्वम् षष्ठविवेकः सूत्रसङ्ख्या 133-36
2. जातकालंकारः अध्यायः 3 श्लोकः 25
3. जातकालंकारः अध्यायः 3 श्लोकः 25
4. जातकालंकारः अध्यायः 3 श्लोकः 25
5. जातकालंकारः अध्यायः 3 श्लोकः 25
6. शभुहोराप्रकारः पृ.सं. 437 श्लोकः 9
7. जातकपारिजातः पृ.स. 291
8. जातकपरि पृ.सं. 294
9. जातकपारिजातः पृ.सं. 294

# जैननये स्मृतिज्ञानसमीक्षणम्

**श्रीशशांकशेखरपात्रः** *

**उपोद्घातः** 'दृशिर्-प्रेक्षणे' (भ्वा. 1057) इतिप्रेक्षणार्थक-दृश्-धातोः दृश्यतेऽनेनेति 'करणाधिकरणयोश्च' (पा.सू. 3.3.117) इति सूत्रेण करणवाच्ये 'ल्युट् च' (3.3. 115) इति सूत्रेण ल्युटि दर्शनशब्दो निष्पद्यते। यथार्थरूपेण वस्तुनः तत्त्वज्ञानं येन दृश्यते ज्ञायते वा तद्दर्शनम्। भारतीयदर्शनं द्विविधमास्तिकदर्शनं नास्तिकदर्शनञ्चेति। पाणिनीयसूत्रानुसारं "अस्ति नास्ति दृष्टं मति (पा.सू. 4.4.60)" इत्यनेन अस्तीति शब्दात्ठकि आस्तिकः, नास्तीति शब्दात्ठकि नास्तिकः।[1] स्मृतिकारमते

**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।**
**स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः[2]॥**

एतेन स्पष्टं भवति यद्वेदप्रामाण्यमस्तीति मतिर्यस्य स आस्तिकः, वेदप्रामाण्यं नास्तीति मतिर्यस्य स नास्तिकः। अर्थाद्यानि दर्शनानि वेदप्रामाण्यं स्वीकुर्वन्ति तान्यास्तिकदर्शनानि, यानि न स्वीकुर्वन्ति तानि नास्तिकदर्शनानि। आस्तिकदर्शनं खलु न्यायवैशेषिकसांख्ययोग- पूर्वमीमांसोत्तरमीमांसाभेदेन षड्विधं भवन्ति। नास्तिकदर्शनं चार्वाकबौद्धजैनभेदेन त्रिविधम्। नास्तिकदर्शने 'जैननये स्मृतिज्ञानसमीक्षणम्' यथामति प्रस्तूयते निबन्धेऽस्मिन्।

**जैनमते प्रमाणस्वरूपम्** जैनदर्शने प्रमाणस्य प्रकृष्टत्वमुद्घोषितम्। उच्यते प्रमाणेन अर्थस्य सम्यक् सिद्धिर्ज्ञानं वा भवत्यतः प्रमेयापेक्षया प्रमाणमभ्यर्हितं पूर्वमिति न्यायेन।[3] अर्थः खलु विषयः ज्ञानं सविषयकं भवति न तु निर्विषयकम्। ज्ञानस्य विषयः खलु

---

* सहायकाध्यापकः, संस्कृतविभागः,
विद्यासागरविश्वविद्यालयस्य दूरशिक्षाविभागः

1. Although grammatically and popularly the two words nāstika and astika have different meanings of their own, with reference to the most wellknown and widely accepted ciassification in the system of Indian Philosophy. Gangopadhyaya, M.K., Philosophy in India, vol.3, Bangalore, 1990, pp. 13-17.
2. म.स. 2.11।
3. प्रमाणादर्थसंसिद्धिः।

प्रमेयम्। प्रमेयं येन ज्ञायते तत्खलु प्रमाणम्। दर्शनान्तरे प्रमायाः करणं प्रमाणमित्यभिहितम्। प्रमाकरणं प्रमाणमित्यस्मिन् विषये भारतीयदर्शने दार्शनिकेषु नास्ति कोऽपि संशयः परन्तु प्रमाकरणविषये वैमत्यं परिलक्ष्यते। यथा न्यायदर्शने इन्द्रियम्, इन्द्रियार्थसन्निकर्षश्च प्रमाणं भवति। परन्तु जैनदर्शने प्रमाणं खलु ज्ञानस्वरूपं भवति यथा दीपकः। उच्यते ज्ञानं दीपक इव स्वयं प्रकाशितं भवति। अर्थाद्दीपकस्य प्रकाशार्थं यथा अन्यस्य दीपकस्य प्रयोजनं न वर्तते। अपि च दीपकप्रभया अन्यानि सर्वाणि वस्तूनि प्रकाशितानि। इत्थं ज्ञानं स्वयं प्रकाशकम्, अन्येषां प्रकाशकारणं भवति। 'लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति नियमात् किं तावत्प्रमाणस्वरूपमित्याकाङ्क्षायामुक्तं यज्ज्ञानमनधिगतार्थं प्रकाशयति तादृशं, बाधवर्जितं निश्चयात्मकं ज्ञानमेव प्रमाणम्।[1] अपि च प्रकर्षेण संशयानध्यवसायाविकल्प-व्यवच्छेदेन मीयते निश्चीयते वस्तुतत्त्वं येन तन्निश्चायत्मकं ज्ञानमेव प्रमाणम्।[2] जैननये सम्यग्ज्ञानेन वस्तुनः यथार्थस्वरूपमवगम्यते। अतः सम्यग्ज्ञानं खलु प्रमाणम्। किं तावत्सम्यग्ज्ञानस्य स्वरूपमित्याकाङ्क्षायामुच्यते यद्वस्तु यादृशं प्रकारकम्, तस्य तादृशं प्रकारकं ज्ञानमेव सम्यग्ज्ञानम्। तदुक्तं सर्वदर्शनसंग्रहे।

**यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा।**
**योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः[3]॥**

**प्रमाणविभागः** जैननये सम्यग्ज्ञानं पञ्चविधा भवन्ति मतिः, श्रुतम्, अवधिः, मनपर्यायः, केवलञ्चेति[4]। जैनदर्शने उमास्वातिवाचकाचार्येण ज्ञानपञ्चकमिदं प्रमाण-मित्युक्तम्।[5] तेन प्रमाणरूपेण ज्ञानं स्वीकृत्य प्रमाणविभागः कथितः। प्रमाणं द्विविधं परोक्षं प्रत्यक्षञ्चेति[6]। प्रत्यक्षं खलु विशदज्ञानम्[7]। अर्थाद्यज्ज्ञानं ज्ञानान्तरेण व्यवधानरहितं निर्मलं स्पष्टं विशिष्टज्ञानमेव वैशद्यम्[8]। विशदविलक्षणं ज्ञानमेव परोक्षम्।[9] परोक्षज्ञानं पञ्चविधं भवन्ति स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदेन।[10] इत्थं परोक्षज्ञानेषु स्मृतिज्ञानमन्यतमम्।

---

1. प्रमाणमविसंवादिज्ञानमनधिगतार्थाधिगमलक्षणत्वात्। अ.श.पृ. 174।
2. स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम्। प.सू. 1.1।
3. स.द.सं.पृ.
4. मतिश्रुतावधिमनः पर्यायकेवलानि ज्ञानम्। त.सू.1.9।
5. तत्प्रमाणे। त.सू. 1.10।
6. प्रमाणं प्रत्यक्षं परोक्षमिति द्विविधम्। प्र.प्र.पृ.2।
7. विशदं प्रत्यक्षम्। प्र.मी. 1.1.13।
8. प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यम्। प्र.र.मा. 1.4।
9. परोक्षमितरत्। प्र.र.मा. 2.1।
10. प्रत्यक्षानिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदम्। प्र.र.मा. 2.2।

पञ्चविधेषु परोक्षज्ञानेषु कस्यचिद्वस्तुनः प्रत्यक्षानन्तरं तस्य संस्कारज्ञानात्स्मृतिज्ञानमुत्पद्यते। स्मृतिज्ञानात्प्रत्यभिज्ञानमुत्पद्यते। प्रत्यभिज्ञानात्तर्को जायते। तर्कादनुमानमुत्पद्यते। इत्थं पूर्वं पूर्वं ज्ञानमुत्तरस्य ज्ञानस्य कारणं भवति। अपि चोत्तरं ज्ञानं फलं भवति।[1] इत्थं स्मृतिज्ञानस्य प्रकर्षं द्योतितं पञ्चविधेषु परोक्षज्ञानेषु।

भारतीयदर्शने सर्वैः दार्शनिकैः स्मृतिस्वरूपमालोच्यते। यावत्परमतं न निराक्रियते तावत्स्वमतमप्रतिष्ठितं स्यादितिन्यायानुसारेण पूर्वपक्षिणां मतरूपेण आदौ न्यायसम्मतं स्मृतिस्वरूपमालोच्य विश्लिष्य च सिद्धान्तरूपेण स्मृतिज्ञानस्य प्रमाणत्वं जैनमतानुसारं निगदितम्।

**न्यायमते स्मृतिज्ञानस्वरूपम्** न्यायसूत्रकारेण स्मृतेर्लक्षणं नोक्तम्। परन्तु वैशेषिकदर्शने सूत्रकारेणोक्तम् आत्मना सह मनसः संयोगात्सन्निधानात्तथा पूर्वानुभूतस्य ज्ञातविषयस्य संस्काराच्चात्मनि स्मृतिरुत्पद्यते।[2] भाष्यकारेणापि स्मृतिकारणमात्ममनसोः सन्निकर्षः संस्कारश्च कथितम्।[3] सामान्यतया संस्कारजन्यपूर्वानुभूतविषयज्ञानं खलु स्मृतिः। संस्कारमात्रजन्यत्वमित्यस्यार्थो बहिरिन्द्रियाद्यजन्यत्वे सति संस्कारजन्यत्वमर्थः। यो गुणः खलु संस्कारत्वजातिविशिष्टः स संस्कारः।[4] संस्कारस्त्रिधा वेगभावनास्थितिस्थापकभेदेन।[5] संस्कारपदेनात्र भावना धर्तव्या।[6] भावना खल्वात्मनः ज्ञानावत्त्वावस्था बोधका भवति।[7] अतीतकाले कस्यचिद्वस्तुनो दर्शनकारणाज्ज्ञानं भवति परन्तु तज्ज्ञानं जन्यत्वाद्विनष्टं स्यात्। परन्तु तज्ज्ञानं भावनारूपसंस्कारेण आत्मनि वर्तते। परवर्तिनिकाले पूर्वसदृशस्य कस्यचिद्वस्तुनः प्रत्यक्षे सादृश्यादिभिः कारणैः[8] संस्कारस्योद्बोधके सति पूर्वानूभूतस्य स्मरणज्ञानं भवति। तज्ज्ञानं खलु स्मृतिः।[9] अत्रोल्लेखनं यद्दर्शनक्रियायाः स्मरणक्रियायाः

---

1. स्मृतिः संज्ञायाः प्रत्यवमर्शस्य (प्रत्यभिज्ञानस्य)। संज्ञा चिन्तायाः तर्कस्य। चिन्ता अभिनि-बोधस्यानुमानादेः। ल.त्र.वृ.पृ. 5।
2. आत्मनः संयोगविशेषात्संस्काराच्च स्मृतिः। वै.सू. 9.2.6
3. यथा खल्वात्ममनसोः सन्निकर्षः संस्कारश्च स्मृतिहेतुरेवम्। न्या.भा. 3.2.33।
4. संस्कारत्वजातिमान् संस्कारः। त.सं.दी.
5. संस्कारो वेगो भावना स्तितिस्थापकश्च। स.प. 36।
6. भावनाख्यः स्मृतिहेतुः संस्कारः। न्या.वा. 3.1.19।
7. ज्ञानजः संस्कारो भावना। स.प. 146।
8. प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधाति-शयप्राप्तिव्यवधानसुखदुःखेच्छा द्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः। न्या.सू. 3.2.47।
9. प्रत्यक्षबुद्धिनिरोधे तदनुसंधानविषयः प्रत्ययः स्मृतिः। न्या.वा. 3.1.19।

कर्ता एको भवेत्।[1] इत्थं स्पष्टो भवति यत्स्मृतिः खलु चक्षुरादिभिरिन्द्रियैरजन्या केवलं भावनारूपसंस्कारमात्रजन्या भवति।[2] यथा एकस्मिन् काले एकस्मिन् नगरे रामो नाम कोऽपि जनो देवदत्तो नामश्च पुरुषं पश्यति। तदानीं तस्य दर्शनादनन्तरं तस्यात्मनि देवदत्तविषयकः संस्कारो जायते। तत्संस्कारबलादेवान्यस्मिन् स्थाने सादृश्याद्यद्बोधकसमवधाने सति अन्यं पुरुषं दृष्ट्वा देवदत्तेन सह इन्द्रियसन्निकर्षाभावेऽपि रामस्य देवदत्तविषयकं ज्ञानं भवति। तदेव स्मृतिः। स्मृतिलक्षणे मात्रपदग्रहणेन प्रत्यभिज्ञायां नातिव्याप्तिः। कुतः? संस्कारजन्यमपरमेकं ज्ञानं खलु प्रत्यभिज्ञा। कस्यचिद्वस्तुनः प्रथमज्ञानं खल्वभिज्ञा, तया अभिज्ञया जायमानात्संस्कारात्परवर्तिनिकाले तद्वस्तुनः सोऽयमिति ज्ञानं हि प्रत्यभिज्ञा। तल्लक्षणं खल्वीन्द्रियसहकृतसंस्कारजन्यं ज्ञानं प्रत्यभिज्ञा।[3] अपि च यस्मिन् ज्ञाने तद्देश-तत्कालयोः पूर्वदेशपूर्वकालयोर्वा एतद्देश-एतत्कालयोः वर्तमानदेशवर्तमानकालयोश्च विषयज्ञानं भवति तत्खलु प्रत्यभिज्ञाज्ञानम्। यदा कश्चित्पुरुषः पूर्वमन्यत्र दृष्टः, पुनरन्यत्र दृश्यते तत्र सोऽयमिति यज्ज्ञानं तदेव प्रत्यभिज्ञाज्ञानम्। यथा सोऽयं देवदत्तः - अयं स देवदत्तः, अस्माभिः काश्यां दृष्टः, स एवायमित्यत्र स इति तत्पदे देवदत्तस्य पूर्वानुभूतस्य संस्कारजन्यं स्मृतिज्ञानं, तत्र पूर्वदेशपूर्वकालयोः सम्बन्धः, अयमिति इदमिति पदे इन्द्रियार्थ- सन्निकर्षजन्यं देवदत्तस्य चाक्षुषप्रत्यक्षज्ञानं, तत्र एतद्देश-एतत्कालयोः सम्बन्धः प्रकाश्यते। अर्थात् स्मृतिप्रत्यक्षाभ्यां प्रत्यभिज्ञाज्ञानमुत्पद्यते।[4] इत्थं ज्ञानस्य विभागत्रयमनुभव-स्मृतिप्रत्यभिज्ञाभेदेन परिलक्ष्यते। परन्त्वेतयोः प्रत्यभिज्ञायाः संस्कार-इन्द्रियार्थसन्निकर्षयो-रुभययोः करणत्वात्प्रत्यक्षेऽन्तर्भावादनुभवस्मृतिभेदेन द्वयं मुख्यरूपेण स्वीकृतम्। स्मृतिर्द्विधा यथार्थायथार्थभेदेन। प्रमाजन्यं स्मृतिज्ञानं यथार्थं भवति। अप्रमाजन्यं स्मृतिज्ञानमयथार्थं भवति। न्यायनये स्मृतिः सदैव अयथार्था भवति। कुतः? स्मृतिरनुभवरजन्या भवति। अनुभवविषयो वर्तमानकालिको भवति। परन्तु अनुभवजन्यः स्मृतेर्विषयः अतीतकालिको भवति। यथा 'देवदत्तोऽयमित्यनुभवजन्यं स्मृतिज्ञानं 'स देवदत्तः' भवति। अत्रानुभवे इदन्ताविशिष्टः देवदत्तो विषयः, स्मृत्यां तत्ताविशिष्टः देवदत्तो विषयो भवति। अतः स्मृति न प्रमाणम्।

**जैनमते स्मृतिज्ञानस्वरूपम्** इन्द्रियमनसाभ्यां मतिज्ञानं जायते। तत्त्वार्थसूत्रकारेण कथितं यन्मतिज्ञानस्य पर्यायवाचकाः शब्दाः खलु स्मृतिः, संज्ञा, चिन्ता, अभिनिबोधश्चेति।

---

1. एकस्तु चेतनोऽनेकार्थदर्शी भिन्ननिमित्तः पूर्वदृष्टमर्थं स्मरतीति एकस्यानेकार्थदर्शिनो दर्शनप्रति-संधानात्स्मृतेरात्मगुणत्वे सति सद्भावः विपर्यये चानुपपत्तिः। न्या.भा. 3.1.14।
2. भावनाऽसाधारणकारणज्ञानंस्मृतिः। स. प. 121।
3. पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवा प्रत्यभिज्ञा। स. प. 139।
4. तदनुगृहीतस्तदनुसंधानविषयः प्रत्ययस्तदभावविषयः प्रत्यभिज्ञानम्। न्या.वा. 3.1.19।

भट्टाकलङ्कदेवेन मतिज्ञानस्य एतान् पर्यायवाचकान् शब्दानाधारीकृत्य स्मृतिज्ञानस्य, प्रतिभिज्ञानस्य, तर्कस्य च प्रामाण्यं प्रतिपादितम्। तस्य मते स्मृतिज्ञानं प्रत्यभिज्ञानस्य कारणं भवति। अतो यदि स्मृतिज्ञानं प्रमाणं न स्यात्तर्हि प्रत्यभिज्ञानस्याप्यप्रामाण्यमापतेत्। अतो जैनमते स्मृतिस्वरूपं निरूप्यते। विद्यानन्देन स्मृतिलक्षणमुक्तं यत्तदित्याकारस्यानुभूतस्य विषयस्य ज्ञानमेव स्मृतिः।[1] मानिक्यनन्दिना उक्तं यत्संस्कारजन्यं तदित्याकारकं ज्ञानं स्मृतिः।[2] यथा कश्चिज्जनः एकस्मिन् स्थाने कमपि पुरुषं पश्यति, तदा तस्य पुरुषस्य दर्शनानन्तरं तस्यात्मनि पुरुषविषयकः संस्कारो जायते। तत्संस्कारबलादन्यस्मिन् स्थाने तेन पुरुषेण सहेन्द्रियसन्निकर्षाभावेऽपि तस्य ज्ञानमुत्पद्यते, तदेव स्मृतिः। तत्स्मृतिज्ञानं प्रमाणम्। जैनदर्शने संस्कारो धारणा इति शब्देनाभिधीयते। अनुभूतविषयस्य ज्ञानस्य निश्चयपूर्वकं ग्रहणमेव धारणा संस्कारो वा। संस्कारात्स्मृतेः जन्यत्वात्स्मृतिरेव धारणाप्रमाणस्य फलमिति भट्टाकलङ्कमतम्। अपि च तेनोक्तं यत्स्मृतिज्ञानमपि प्रमाणम्। स्मृतिप्रमाणस्य फलं खलु प्रत्यभिज्ञानम्।[3] यतो हि स्मृतिं विना प्रत्यभिज्ञानं नोत्पद्यते। अत्रोल्लेखनीयं यद्-भारतीयदर्शने जैनदर्शनं व्यतिरिच्य अन्यस्मिन् दर्शने स्मृतिज्ञानं स्वीकृतं परन्तु प्रमाणरूपेण तन्न स्वीकृतम्।

**जैनमते स्मृतिज्ञानस्य प्रामाण्यम्** जैनदर्शने भट्टाकलङ्केन स्मृतिज्ञानस्य प्रमाणत्वं प्रतिपादितम्। विषयेऽस्मिन् तेन प्रतिपादिताः युक्तयोऽध उपस्थाप्यन्ते।

**प्रथमतः** जैनमते ज्ञानमविसंवादकत्वात्प्रमाणं भवति।[4] अविसंवादक इति शब्दस्यार्थो निश्चयात्मकः। स्मृतिज्ञानमपि प्रमाणमविसंवादकत्वात्।[5] ननु यदि स्मृतिज्ञानमविसंवादक-त्वात्प्रमाणमिति मतं दूषयितुं चेष्टते तर्हीत्याकाङ्क्षायां जैनदार्शनिकानां स्वाभिमतं यत्स्मृतिज्ञानमज्ञातार्थप्रकाशात्तत्प्रमाणम्। तत्रापि यदि मतमिदं दूषयितुमनुभाषते यद् गृहीतग्रहणात्तन्न प्रमाणमर्थात्प्रत्यक्षेण गृहीतस्य विषयीकृतस्य पुनः स्मृत्या ग्रहणाद्विषयी-करणात्स्मृतिज्ञानं न प्रमाणमित्याकाङ्क्षायामुक्तं यत्तर्हि प्रत्यक्षज्ञानस्यापि अर्थाकारानुकारा-भावात्प्रमाणाभावापत्तिर्जायते। यतो हि जैनमते प्रत्यक्षज्ञानमविसंवादकतया प्रमाणं न त्वर्थाकारानुकारितया। कुतः? अर्थाकारानुकारितया प्रत्यक्षज्ञानं प्रमाणमिति स्वीक्रियते चेत्तर्हि तदसङ्गतम्।[6] कुतः? प्रत्यक्षज्ञानं द्विविधं निर्विकल्पकं सविकल्पकञ्चेति। तत्र

1. तदित्याकारानुभूतार्थविषया स्मृतिः। प्र.प.पृ. 42।
2. संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः। प.मु. 3.3।
3. अविसंवादस्मृतेः फलस्य हेतुत्वात्, प्रमाणं धारणा। स्मृतिः संज्ञायाः। अक.ग्र.त्र.पृ. 5।
4. प्रमाणंस्मृतिः। कुतः? अविसंवादात्। सि.वि.नि.वृ. 3.2।
5. प्रमाणंस्मृतिः। कुतः?अविसंवादात्। सि.वि.नि.वृ. पृ. 174।
6. प्रत्यक्ष्यस्यापि प्रामाण्यमविसंवादान्न पुनरर्थाकारानुकारितया अतिप्रसङ्गात्। सि.वि.नि.वृ. 3.2।

सविकल्पकप्रत्यक्षपक्षे निर्विकल्पकस्य विषयस्य ग्रहणादनधिगतार्थभावाद्व्यवसायाभावाच्च प्रमाणत्वाभावे मतमिदमसमीचीनम्। अतोऽविसंवादकत्वात्प्रत्यक्षमिव स्मृतिज्ञानमपि प्रमाणं भवति।[1] परन्त्वेतद्वक्तुं न शक्यते यत्सर्वं स्मृतिज्ञानं प्रमाणम्। तत्र यत्स्मृतिज्ञानमविसंवादकं तत्प्रमाणं न तु विसंवादकं स्मृतिज्ञानम्।[2]

**द्वितीयतः** जैनमते सर्वथा अगृहीतार्थज्ञापकं ज्ञानं प्रमाणमिति प्रमाणलक्षणं न स्वीकृतम्। यतः कदाचित्कानिचिदगृहीतग्राहिज्ञानान्यपि प्रमाणानि भवन्ति। प्रत्यक्षेण गृहीतस्य विषयस्य पुनः गृहीतत्वात्स्मृतिरप्रमाणमिति कथ्यते चेत्तर्हि तन्न समीचीनम्। कारणं स्मृतिप्रत्यक्षयोः द्वयोः ज्ञानयोः प्रयोजनयोः मध्ये विशेषो वर्तते।[3] यथा प्रत्यक्षेण ज्ञातविषयस्य उत्तरोत्तरकाले कालभेदेन पर्यायवशादाकारादेः विशेषः परिलक्ष्यते। यथा प्रत्यक्षेण स्तम्भादीनां प्रत्यक्षानन्तरं तस्याकारादीनां पर्यायभेदेन विशेषो जायते। स्मृत्या आकारादिभेदेन विशेषाणां ग्रहणात् स्मृतिरप्रमाणमिति वक्तुं न शक्यते।[4] यतोऽधिगतविषयस्य कालस्य पर्यायभेदेन भिन्नत्वाद्भिन्नकालविशिष्टविषयस्य ग्रहणादनधिगतार्थज्ञापकात्स्मृतिरपि प्रमाणं भवति।

**तृतीयतः** अनुमितिकरणमनुमानम्। व्याप्तिज्ञानेनानुमितेः जन्यत्वाद् व्याप्तिज्ञान-मेवानुमानम्। लिङ्गलिङ्गिनो साहचर्यनियमज्ञानमेव व्याप्तिः। यथा यत्र यत्र धूमस्तत्र तत्र वह्निः। महानसे साध्यसाधनयोः साहचर्यज्ञानप्रत्यक्षानानन्तरं पर्वते धूमध्वजं दृष्ट्वा वह्न्यनुमितिर्भवति।[5] जैनमते स्मृतिप्रमाणेनानुमानस्य प्रवृत्तिः सफला भवति। अतः स्मृतिः यदि प्रमाणं न भवति तर्हि तस्याभावे लिङ्गलिङ्गिनोः मध्ये व्याप्तिज्ञानाभावादनुमितिर्भवितुं न शक्नोति। यथा महानसे धूमाग्नयोः प्रत्यक्षेण सहावस्थानं दृष्ट्वा उत्तरोत्तरकाले पर्वते धूमध्वजं दृष्ट्वा पूर्वानुभूतं धूमाग्नयोर्व्याप्तिज्ञानं स्मृत्वा पर्वतो वह्निमानित्यनुमितिज्ञानमुत्पद्यते। अनेन स्पष्टं भवति यत्स्मृतिं विना व्याप्तिज्ञानं न भवति।[6] इत्थं जैनानां वक्तव्यं

1. न हि तयाऽर्थ परिच्छिद्य अर्थक्रियायां विसंवाद्यते। सि.वि.नि.वृ. 1.9।
2. मिथ्या तद्विपर्ययात्। सि.वि.नि.वृ. 3.2।
3. गृहीतग्रहणान्नो चेन्न प्रयोजनभेदतः। सि.वि.नि.वृ. 3.2।
4. क्वचित् सदृशाकारभेदविशेषाणामुत्तरोत्तरपर्यायविशेषसाध्यार्थक्रियावाञ्छायां तथैव प्रामाण्यविरोधात्। सि.वि.नि.वृ. 3.2।
5. साकल्येनादितो व्याप्तिः पूर्वं चेल्लिङ्गलिङ्गिनोः।
   अनुमेयस्मृतिः सिद्धा न प्रमाणं विशेषवत्।। सि.वि. 3.3।
6. यावान् कश्चिद् धूमवान् प्रदेशः स सर्वोऽपि अग्निमानिति व्याप्तावसिद्धायामनुमेयप्रतिपत्तयनुपपत्तेः। सिद्धौ एवमनुमानं स्मृत्यन्तरान्न विशेष्येत। ततो लिङ्गलिङ्गिज्ञानयोः प्रमाणेतरव्यवस्था व्यतिकीर्येत। स्वयमनुभूताद् व्यतिरेके पुनरवयवेन व्याप्तिसिद्धेरयोगात्। सामान्यविषया व्याप्तिस्तद्विशिष्टानुमितेः इति चेत्; पूर्वानुभूतस्मृतेरपि तथाविदविशषानिराकरणात् यत्किञ्चिदेतत्। सि.वि.वृ. 3.3।33.
   न हि तयाऽर्थ परिच्छिद्य अर्थक्रियायां विसंवाद्यते। सि.वि.नि.वृ. 1.9।

यत्स्मृतिप्रमाणेनानुमानस्य प्रवृत्तिरूपप्रयोजनसिद्धत्वात् सा अपि प्रमाणं भवति। यतो स्मृतिः यदि प्रमाणं न स्यात्तर्ह्यनुमानमप्यप्रमाणम्। अतः स्मृतिः पृथक्प्रमाणत्वेनाङ्गीकृता।

**उपसंहृतिः** जैनमते लौकिकव्यवहारानुसारं[1] यदि प्रमाणस्य प्रामाण्यमङ्गीक्रियते तर्हि स्मृतिज्ञानस्य प्रामाण्यं न प्रतिषिद्ध्यते। यतो हि नः जीवने प्रायशः व्यवहारिककार्यं स्मृतिज्ञानेन साधितम्। उच्यते यदि शब्दार्थयोः संकेतो न स्मर्य्यते तर्हि समुचितायाः भाषायाः प्रयोगो न भवितुमर्हति। इत्थं जैनेन व्यवहारेण स्मृतिज्ञानस्य प्रमाणत्वं व्यवस्थितम्। अपि च तेन प्रत्यक्षमिव स्मृतिरपि प्रमाणमुद्घोषितम्। परन्तु एतद्वक्तुं न शक्यते यत् सर्वं स्मृतिज्ञानं प्रमाणम्। तत्र यत्स्मृतिज्ञानं निश्चयात्मकम्, व्यवहारोपयोगित्वं भवति तत्प्रमाणं भवति। यदि प्रत्यक्षपूर्वकं स्मृतिज्ञानं भवतीत्याशङ्क्यते तर्हि समाधातुमुच्यते प्रत्यक्षपूवकमनुमानमप्यप्रमाणं स्यात्। परन्तु तन्न भवति। अनुमाने प्रयुक्तयोः साध्यसधनयोः व्याप्तिज्ञानं स्मृतिं विना अनुमातुं न शक्यतेऽतः स्मृतिज्ञानं स्वतन्त्रप्रमाणमिति जैनानामाशय इति शम्।

**सहायकग्रन्थाः**

1. उमास्वामिः, तत्त्वार्थसूत्रम् (तत्त्वार्थवृत्तिसहितम्); सम्पा. ए. शान्तिराजा शास्त्री, माइशोरः, ओरियेण्टाललाइब्रेरि, 1944।
2. भट्टाकलङ्कदेवः, तत्त्वार्थवार्तिकम्; सम्पा. महेन्द्रकुमारजैनः, वाराणसी, भारतीयज्ञानपीठप्रकाशनम्, 1944।
3. भास्करनन्दिः, तत्त्वार्थवृत्तिः; अनु. श्री आर्यिका, राजस्थानम्, कमलप्रिण्टर्स।
4. उमास्वातिः, तत्त्वार्थाधिगमभाष्यम्; अनु. खुवचन्द्रजी सिद्धान्तशास्त्री, बम्बई, रायचन्द्रजैनशास्त्रमाला, 1962।
5. विद्यानन्दिस्वामिः, तत्त्वार्थश्लोकवार्तिकम्; सम्पा. मनोहरलालः।
6. हेमचन्द्रः, प्रमाणमीमांसा, (स्वोपज्ञवृत्तिसहिता); सम्पा. सुखलालजी संघवी, कलकात्ता, सिंघीजैनग्रन्थमाला, 1939।
7. प्रभाचन्द्रः, प्रमेयकमलमार्तण्डः; सम्पा. महेन्द्रकुमारशास्त्री, वम्बई, निर्णयसागरप्रेस, 1941 (द्वितीयसंस्करणम्)।
8. वादिराजसूरिः, न्यायविनिश्चयविवरणम्; सम्पा. महेन्द्रकुमारजैनः, नवदेहली, भारतीयज्ञानपीठम्, 2000।

---

1. प्रामाण्यं व्यवहारेण। प्र.वा. 1.7।

9. सिद्धसेनदिवाकरः, न्यायावतारसूत्रम्; सम्पा. विजयमुर्तिः, बम्बई, रायचन्द्रजैन-शास्त्रमाला, 1950।

10. वादिदेवसूरिः, प्रमाणनयतत्त्वालोकालङ्कारः, रत्नाकरावतारिकाव्याख्यासहिता; सम्पा. विजयधर्मसूरिः, वाराणसी, फार्माभ्युदयप्रेस, 1918।

11. भट्टाकलङ्कदेवः, अकलङ्कग्रन्थत्रयम्, (लघीयस्त्रयम्, न्यायविनिश्चयः, प्रमाण-संग्रहश्च); सम्पा. जिनविजयमुनिः, अमदावादः, सिंघीजैनग्रन्थमाला, 1936।

12. पूज्यपादः, सर्वार्थसिद्धिः; सम्पा. फूलचन्द्रशास्त्री, वाराणसी, भारतीयज्ञानपीठ-प्रकाशनम्, 1997।

13. शर्मा, चंद्रधर, 'भारतीय दर्शन'।

14. शर्मा, लक्ष्मीनारायण, 'चार्वाक दर्शनम्'।

15. शर्मा, श्रीराम, 'न्याय एवं वैशेषिक दर्शन'।

16. सिन्हा, हरेंद्र प्रसाद, 'भारतीय दर्शन की रूपरेखा'।

17. सिन्हा, जे.एन., 'भारतीय दर्शन'।

18. Heera, Bhupendra, 'Uniqueness of Charvak Philosophy in Traditional Indian thought'.

19. Dasgupta, S.N., 'A History of Indian Philosophy'.

20. Lal, B.K., 'Contemporary Indian Philosophy'.

21. Sinha, J.N., 'Indian Philosophy'.

